## चरणम्

काशीनाथ पुरीमध्यदेश निलये,
मध्यदेश जन समृद्धिप्रदे ।
करुणार्द्र चित्ते कात्यायनि प्रिये,
कामारी प्रिये काम जनके ।।कमलाम्बिके।। १।।

—०—

अम्बिका—१५ रागं देवमनोहरि—तालं आदि

## पल्लवि

नहि भाषसे अम्बे-बाले नहि भाषसे अम्बे ।
भाषणे मान हानि किं वद बाले ।।नहिभाषसे।।

## अनुपल्लवि

मणिगण समुज्ज्वल भूषणाऽलंकृते,
दितिज कुलान्तके देवर्षिपूजिते ।।नहिभाषसे।।

## चरणम्

मामिह दीनं शरणगं तव बालं,
पाहि महेश्वरि कारुण्यसागरे ।
देव काशीनाथ देव मनोहरि बाले,
देव मनोहरि राग महाप्रिये ।।नहिभाषसे।। १।।

—०—

अम्बिका (वरलक्ष्मी)–१६ रागं बिलहरि–तालं त्रिपुट चापु

### पल्लवि

सौभाग्यवर लक्ष्मीं भजेसदा,
सर्वसौभाग्य प्रदां वर लक्ष्मीम् ॥

### अनुपल्लवि

एहि पाहि धनंदेहि दारिद्र्यविभंजनि त्वरितं
प्रविश गृहंमम सर्वदा सुखं वस श्रीवरमहालक्ष्मी ॥सौ॥

### चरणम्

सीमन्तिनि गण पूजित चरणे,
दीर्घ सौमंगल्य प्रदान निपुणे ।
दीर्घ सम्पद्दान हर्ष समन्विते,
दीर्घायुः पुत्रादि दान महोत्सवे ॥सौभाग्य॥१॥
श्रीमहाविष्णु हृदय सदने,
श्रीकाशीनाथ पुरीमध्य निलये ।
श्रीकाशीनाथऽन्नपूर्णि महाप्रिये,
सकल जनानन्द कारिणि वरदे ॥सौभाग्य॥२॥

—०—

अम्बिका–१७ श्रीरागं–तालं आदि

### पल्लवि

श्री चक्र निलये-श्रीपुर वासिनि
शृंगार लतिके ॥

## अनुपल्लवि

श्रीनिवास सहजे-अम्ब-

❀ श्रित कल्याण कलेबरे वरदे,
पाहि विश्वेश्वरि कामदुघे जय ॥श्री॥

## चरणम्

आर्य सेव्य पदाब्जे❀ अनघ त्रिकोणग
मध्यबिन्दु लसिते ।
सकल जन मूलाधार कुण्डलिनि,
❀ सर्व सम्पत्प्रद वारिधि चन्द्रे
सज्जन हृदय विहारिणि मनोहरि ॥श्रीचक्र॥१॥

कादि पंच दशार्णे सकल कलात्मिके
मन्त्र यन्त्र रूपे ।
काशीनाथ वर पार्श्व संकलिते
❀ भाग्य [भक्ति] ज्ञान विरागदे मोक्षदे
सर्व कलाप्रदे शांभवि शंकरि ॥श्रीचक्र॥२॥

—०—

अम्बिका–१८ (जननि निन्नुविना) वत् ॥
रागं रीतिगौले–तालं मिश्र चापु

## पल्लवि

सकल भुवन जननी-जगन्मोहिनि,
सकल भुवन जननी आनन्ददायिनि
निगमान्त संचारिणि । सकलभुवन॥

❀ द्रुतगति

## चरणम्

महिषासुर मर्दिनि महाराज्ञि
महनीयगुण शालिनि ।।
मधुरापुरी वासिनि मायारूपिणि
*|मन्मथाकृति रूपधारिणि,
|मधुरतर संगीत मोदिनि ।।सकलभुवन।।१।।

सरसीरुह निलये सान्द्रा नन्दे
सनकादि वन्दिते ।
सकलागम रूपिणि साम्राज्य दायिनि,
*|सकल लोक सुख प्रदायिनि,
|सर्वं खेद विनाश कारिणि ।।सकलभुवन।।२।।

वरदाऽभय दायिनि वामांक वासिनि
वारिज दल लोचनि ।
विन्ध्याचल वासिनि विकटानने,
*|वारिजासन प्रमुख मुनिगण,
|वारणाऽऽनन जननि सुन्दरि ।।सकलभुवन।।३।।

अरुणाऽरुण वसने चन्द्राऽऽनने,
चाम्पेय कुसुमाभे ।
चन्द्रांकित मस्तके चन्द्रहासे,
*|चण्डमुण्ड निशुंभ मर्दिनि चन्दनादि
| सुगन्ध मोदिनि ।।सकलभुवन।।४।।

कलि कल्मष नाशिनि काशीनाथ
पुरवराऽधीश्वरि ।

---

* द्रुतगति

कांचीपुराऽधीश्वरि कामाक्षि,

❀{ कामकोटि पीठाधिवासिनि
काशीवासि जनाऽन्नदायिनि ॥सकलभुवन॥५॥

—०—

अम्बिका—१९ रागं षण्मुखप्रिय—तालं आदि

## पल्लवि

श्रीकण्ठ वर जाये कमलाग्रवासिनि
कल्प लतिके शुभे जय ॥श्रीकण्ठ॥

## अनुपल्लवि

नवपल्लवाऽरुण कराम्बुज चरणे,
मणिमय कंकण कुण्डलाऽलंकृते ॥श्रीकण्ठ॥१॥

## चरणम्

अभय प्रदायिनि आश्रित पोषिणि,
आराधित फल दायिनि शंकरि ॥श्रीकण्ठ॥२॥

जंभारि पोषिणि जराशोक हारिणि,
जनयभक्ति तव पाद सरोरुहे ॥श्रीकण्ठ॥३॥

कालाऽहिवेणि कंजदलाक्षि
कलिमलहारिणि काशीनाथाऽग्रहे ॥श्रीकण्ठ॥४॥

—०—

❀ द्रुतगति

अम्बिका—२० रागं कल्याणि—तालं रुपक

## पल्लवि

एहि मुदं देहि त्रिपुरसुन्दरि ।

## अनुपल्लवि

वाराणसी पुरि वासिनि
वारणास्य जननि शंकरि ।।एहि।।

## चरणम्

हिमकर सम वदने हिमगिरि वरतनये ।
इन्दु कलाधर जाये ईति भीतिहारिणि अम्ब ।।एहि।।१।।

मदकरि समगमने-मन्दहास वदने ।
मारकोटि सुन्दरि गौरि-
मणिमयाऽऽभरणाऽलंकृते ।।एहि।।२।।

शूराऽसुर संहारिणि-शुंभदैत्य संहारिणि ।
शूलाऽऽयुध वर धारिणि शूलरोग संहारिणि ।।एहि।।३।।

काशीनाथ क्षुन्निवारक भिक्षाऽन्नदायिनि ।
काशीनाथ वामभाग-
वासिनि गौरि परम कल्याणि ।।एहि।।४।।

—०—

अम्बिका—२१ रागं भैरवि—तालं आदि

## पल्लवि

नील नलिन दल लोचने-अम्ब
निखिल लोक जननि श्री कामाक्षि ।।नील।।

## अनुपल्लवि

सदाशिव प्रिय कुटुम्बिनि
सान्द्र करुणा करे समरसे ।।अम्बनील।।

## चरणम्

कंज दलाक्षि कामप्रदे कदम्बवनवासिनि वरप्रदे ।
कंजभव वन्दित चरणे कल्याण कलेबरे शुभप्रदे ।।अम्बनील।।१।।
तुषार गिरि तनुद्भवे तुम्बुरु नारद संगीतगे ।
तुंगदुरिताद्रि विभेदिनि तुंग भाग्यादिप्रदे तुंगस्थिते ।।
अम्बनील।।२।।
कामकला श्रीविद्याप्रदे कल्याणदायिनि श्री चक्रगे ।
काशीतल वासिनि कान्तिदे काशीनाथ हृद्गते कलात्मिके ।।
अम्बनील।।३।।

—०—

अम्बिका—२२ रागं आरभि—तालं आदि

## पल्लवि

शीतलाम्ब देवि *शीलगुणान्विते
शीतलांगि सुखदे ।

---

* द्रुतगति

## अनुपल्लवि

मलयजमल्लिका कुसुम सुभूषिते
मन्मथ हारि शिवोत्सव कारिणि ॥शीतलाम्ब॥

## चरणम्

निम्बवात सुमुखे-रोगहरे शिवे-स्फोटकादि हरणे ।
दुष्ट मसूरिका रोगमूलहरे जन्हुसुता वारिमज्जन सन्तुष्टे ॥
शीतलाम्ब॥१॥

सर्वलोक शुभदे काशीवासिनि कामकोटि सुजये ।
काशीनाथ शिव सन्तोषकारिणि शीतलशैल समुद्भव
शोभने ॥शीतलाम्ब॥२॥

—०—

अम्बिका—२३ रागं पन्तुवरालि/आरभि—तालं आदि

## पल्लवि

तुषारगिरिकन्ये त्वां भजे, चिन्ताशोक हरणे । तुषार॥

## अनुपल्लवि

शीतलनीरनिमज्जनहृदये गांगजवारि सदार्द्र शरीरे ॥तुषार॥

## चरणम्

शीतलांशुखि तापहरे शिवे,
शिंजन्मणि दिव्यहार समुज्ज्वले ।

अद्‌भुत रुद्र सरोवरनिलये,
श्रीकाशीमध्यग जाह्नवि कूलगे ।।तुषार।।१।।

अस्थिजमसूरिका रोग निर्मूलिनि,
शीघ्र सर्वारोग्य दायिनि शंकरि ।
शान्तिप्रदायिनि सर्वसम्पत्करे,
सर्वगुणाकरेसकलयोगिवन्द्ये ।।तुषार।।२।।

शीतलेति दिव्यनाम शुभं तव,
सर्वतापहर विमल यशोंकिते ।
तारितलोक त्र्यात्मिके श्रीकरि,
काशीनाथ वराग्रिम जाये महोदये ।।तुषार।।३।।

—०—

अम्बिका—२४ रागं यमुनाकल्याणी—तालं त्रिपुट

पल्लवि

नौमिविन्ध्य नगाग्रवासिनि
चिन्मयाऽऽनन्दरूपिणि ।

अनुपल्लवि

नन्दनन्दनाऽऽनंद दायिनि
नारायण सहोदरि ।।नौमिविन्ध्य।।१।।

चरणम्

दुष्ट दैत्य संहारिणि शिवे,
दुर्गाति [दुर्गति] हरे चण्डिके ।

दुःख प्रद संसार हरणे,
दुर्गमसर्व भाग्यदे ।।नौमिविन्ध्य।।२।।

श्री काशीनाथ नगर दक्षिण,
सीमा वासिनि शांभवि ।
सर्वदुःख संहार कारिणि,
श्रीप्रदे भुवनेश्वरि ।।नौमिविन्ध्य।।३।।

—०—

अम्बिका (सरस्वती)—२५ रागं अठाणा—तालं आदि

पल्लवि

वाणी वीणाऽभय वर पुस्तक धारिणि ।।वाणी।।

अनुपल्लवि

पद्म समुद्भव महिषि वराऽऽनने
श्वेत पद्मासन संस्थिते सुमुखे ।।वाणी।।

चरणम्

शुभ्रांशुकधरे शुभ्रशरीरे,
शुभ्रपदप्रदे शुभ्रमतिप्रदे ।
शुभ्र चरित्र सुशील जनप्रिये,
दिव्य वाणीप्रदे शुक इव शोभने ।।वाणी।।१।।

निज जन वदन विहारिणि हरि प्रिये
शम्भु काशीनाथ स्वयम्भु सुरप्रिये ।
सत्कथा प्रवचन जिह्वाग्र वासिनि,
सकल सुरासुर वन्दित चरणे ।।वाणी।।२।।

—०—

राम—१ रागं केदारं—तालं रूपक

पल्लवि

चिन्तय रघुवीरं ॐविजयमनोहर रूपम्
निगमान्त संचारम् ।

अनुपल्लवि

वेदोपनिषदाकारं ॐनित्यमहोत्सवदायक नित्यानन्दसुखप्रदम् ।।
।।चिन्तय।।

चरणम्

कल्याण सुख कन्दं ॐकमनीय धृतकोदण्डम्
कारुण्यार्णव सोमम् ।
काशीनाथ हृद्विलासं ॐश्यामल रामस्वरूपम्
ॐकविजनमोदकरं परम् ।।चिन्तय।।१।।

—०—

ॐ द्रुतगति

राम–२ रागं भैरवि–तालं आदि

## पल्लवि

श्रीरघुकुल वर भूषण राम सरसिज-
लोचन विकर्त नाभ ।।श्री।।

## अनुपल्लवि

कराम्बुजाश्रित कोदण्डमण्डित,
दण्डित रिपुजन पण्डित परिपाल ।।श्री।।

## चरणम्

आगमसार अवनि परिपाल,
अवनत लोल श्री अमित पराक्रम ।।श्री।।१।।

अवनि जनाधार अपरिमेयाकार,
अखिल लोकाधार अमित गुणाकर।।श्री।।२।।

कालमेघाभ कमनीय नाभ,
काशीनाथ हृदयानन्ददायक ।।श्री।।३।।

—०—

राम–३ रागं बिलहरि–तालं झंप

## पल्लवि

परिवादं मा वद श्री पतित जन पावन ।

## अनुपल्लवि

वरदानमिह देहि दीन जन परित्राण ।।परिवादं।।

## चरणम्

परिहसनं माकुरु पतितमिति श्रीरमण,
रघुवीर तव चरण पतितमिह तारय ॥परिवादं॥१॥
भुवन जन कलुषहर काशीनाथाऽऽश्रय,
कलिवरद जानकी रमण कुल भूषण ॥परिवादं॥२॥

—०—



रागं कथनकुतूहलं–तालं आदि

## पल्लवि

रघुवंश महोदधि पूर्णचन्द्र,
रजनीचर कुल काल राम ॥रघुवंश॥

## अनुपल्लवि

अणिमादि सम्पद्दान शौण्ड,
अगणितगुण भूषित श्रीराम ॥रघुवंश॥

## चरणम्

स्वर्णमय माया मृग हरण,
माया मानुष सुगुणावतार ।
धर्माचरण बोधकावतार,
काशीनाथ बिन्दु माधवस्वरूप ॥रघुवंश॥१॥

—०—

राम—५ रागं कथनकुतूहलं—तालं आदि

## पल्लवि

रघुवंश सुखां बुधिपूर्ण चन्द्र,
रण रंग धीर रजोगुण हर ॥रघुवंश॥

## अनुपल्लवि

ताटकान्तक तारापति मुख,
दण्डिताऽरिवर्ग प्रचण्ड प्रताप ॥रघुवंश॥

## चरणम्

मायामय लोक सृष्टिकारण,
माया संसृतिमग्न जनोद्धार ।
मन्दस्मेरमुख मंगलावतार,
शिवशंकर काशीनाथ रूप ॥रघुवंश॥१॥

—०—

राम—६ रागं हंसध्वनि—तालं रूपक

## पल्लवि

मदनमोहन दिव्य सुन्दर मन्दहास वदन सुमुख ॥

## अनुपल्लवि

जलजभवाऽऽश्रित चरण,
जनक कन्या मनोहरण ॥मदन॥

६

## चरणम्

गुरु तर वर भक्तिदायक गुरुजन परितोषण ।
गुह वरद (राम) गुरु तर श्री
काशीनाथ सुलभ ॥मदनमोहन॥१॥

—०—

राम–७ रागं शंकराभरणं–तालं आदि

## पल्लवि

सदय गुण रघुराम प्रभो ।

## अनुपल्लवि

कमनीयगुण राजशिरोमणे,
वनजासन नुत कोदण्ड राम ॥सदयगुण॥

## चरणम्

रजनीचर वर विभीषण पालन,
विहर भयातुर कीशाऽभयप्रद ।
गुरुवर गुहप्रिय काशीनाथ स्तुत,
रघुकुल वर शुभ श्रीरामचन्द्र ॥सदयगुण॥१॥

—०—

राम–८ रागं कथनकुतूहलं–तालं आदि

पल्लवि

राम भजन [नाम मन्त्र] मनोल्लास कर,
नील कण्ठ शिव वाग्विलासभूत ॥राम॥

अनुपल्लवि

कदनप्रिय निशाचर हर,
कथनकुतूहल राग प्रिय ॥राम॥

चरणम्

शातकुम्भमणि हार भूषण,
शाम्भवी मनोहर शम्भुप्रिय ।
शतकोटि मन्मथ सुन्दरांग,
काशीनाथ हृत्पंकजाऽधिरूढ ॥राम॥१॥

—०—

राम–९ रागं रविचन्द्रिका–तालं आदि

पल्लवि

निगम गोचर राम निर्मल स्वान्त,
निर्जित रिपुवर्ग········· ॥निगम॥

## अनुपल्लवि

निशिचर खण्डन विधिमुखमण्डन,
योगिराज ध्येयमान साधुसम्मत सुसहन ।।निगम।।

## चरणम्

धरणिजा स्त्रीवरहरण कुतूहल,
सुविमल यशोधन हरण समुत्सुक ।
क्षितिभुज मानस सर्वबलहर,
*जानकी मानस ह्लादन चन्द्र काशीनाथ हृत्सदनग
।।निगम।।१।।

—०—

राम—१० रागं कल्याणि—तालं रूपक

## पल्लवि

पाहि श्री सीतानायक रघुकुलाऽवतार ।
कौशिक याग (फ) पालक राक्षस कुलनाशक ।।पाहिश्री।।१।।

## चरणम्

ताटका वध कुशल अहल्या शापमोचन ।
शिव पिनाक भंजन जानकी मनोहरण ।।पाहिश्री।।२।।
शबरी वरप्रदान अंजनासूनु प्रसन्न ।
सुग्रीवाऽभयप्रदान वालिमथन धीर ।।पाहिश्री।।३।।

* द्रुतगति

दारितदशवदन नलिनीदल नयन ।
विभीषण सन्त्राण आर्जित पापमोचन ॥पाहिश्री॥४॥
काकासुर संत्राण काशीनाथाऽनुकूल ।
तारक मंत्रराज श्री पर ब्रह्मानन्द नाम ॥पाहिश्री॥५॥

—०—

राम—११ रागं नाट कुरंजि—तालं मिश्रचापु

पल्लवि

सच्चिदानन्दं समरस बोधम्
आश्रयामि सततं रघुवीरम् ॥सच्चिदानंदं॥१॥

चरणम्

गुणातीतं निर्मल रूपम्
अमर संप्रार्थित सगुण स्वरूपम् ॥सच्चिदानंदं॥२॥
नारायणं नररूप धारिणम्
नत जन पातक नाशकरम्परम् ॥सच्चिदानंदं॥३॥
राम ब्रह्मं रविकुल सोमम्
रजनीचर कुल कालं भीमम् ॥सच्चिदानंदं॥४॥
भक्ताऽऽधारम्भवभीति नाशम्
भरताग्रजरामम्भक्तसुगम्यम् ॥सच्चिदानंदं॥५॥
इनकुलदीपं इभराज तारकम्
इहाऽमुत्रार्थफलदायकं रामम् ॥सच्चिदानंदं॥६॥

सदानंदं सुजनाऽनुकूलम्
सुग्रीव राज्यदं सत्यसंकल्पम् ।।सच्चिदानंदं।।७।।

कमला नाथं कमनीय विग्रहम्
काशीनाथ हृत्पद्म विहारं ।।सच्चिदानन्दं।।८।।

--०--

राम—१२ रागं अठाणा—तालं रूपक

पल्लवि

एहि [पाहि] रामचन्द्र, राक्षस भीम भीम ।।एहि।।१।।

चरणम्

दूर्वांकुरदलश्याम दलितदुरितसमुदाय ।
दूताग्रज मारुतिनुत प्रार्थितवर वरदाऽभयद ।।एहि।।२।।
करधृतशरकोदण्ड शमितसुजन ताप ।
दानवदशमुख भंजन मन्दहास मधुमुरहर ।।एहि।।३।।
मत्स्यादिदशाद्यवतार तेजोमयरूप ।
काशीनाथ हृत्सरोजनिलय भूसुताऽलंकृत श्रीराम ।।एहि।।४।।

—०—

राम—१३ रागं कानडा—तालं आदि

पल्लवि

एहि विभो रघुवंश तिलक,
पाहिशरण्य करुणालवाल ।।एहि।।

## अनुपल्लवि

राका चन्द्र समान वदन,
राजीव लोचन रण जय धीर ॥एहि॥

## चरणम्

मृगमद तिलक मरकत छाय,
माया मारीच खर संहार ॥एहि॥१॥

परशुराम गतिरोधक श्रीकर,
सद्गतिदायक परमकल्याण ॥एहि॥२॥

करुणाऽऽलय काशीपति सेवक,
स्वात्माऽऽनन्दद स्वाऽऽश्रितपोषक ॥एहि॥

—०—

राम—१४ रागं हंसध्वनि—तालं आदि

## पल्लवि

रघुतिलक श्रीरामजय ॥रघुतिलक॥

## अनुपल्लवि

रघुवंश चन्द्र रमणीय वेष,
राजीव नयन नतजनावन ॥रघुतिलक॥

चरणम्

गौतमवधू शाप निवारण[क],
रजनीचर संहार धीर ।
त्रुटितशंभु चाप भूप गर्व भंग,
भूसुताऽलंकृत भूसुरादि मान्य ॥रघुतिलक॥१॥

परशुराम पर गतिरोधक,
पशुपति मुखविलास भूत ।
शबरी मनोरथ पूरण,
शरभंग सुतीक्ष्ण मुनि नुत ॥रघुतिलक॥२॥

कुशिक सूनुमख संरक्षण पर,
कुशलवतात कुवलयाऽऽनन ।
काशीनाथ सेवित नामविभव,
काशीनाथ हृन्निलय रामचन्द्र ॥रघुतिलक॥३॥

—०—

राम–१५ रागं गांबोधि–तालं झम्पा

श्रीराम जयराम श्रृंगार राम जय किमिति
नहि वदसिरे दिव्यरसने ॥श्रीराम॥१॥

(अथवा)

श्रीराम रघुराम सीतामनोहर किमिति दिव्यनामम्
नहिवदसि रे ॥श्रीराम॥१॥

लोक वार्ता रसज्ञे दिव्यषड्रसपरिज्ञे
मधुरतर नामरुचिं किन्नदृष्टं ॥श्रीराम॥२॥

अद्यं पश्यसि त्वंहि श्रीराम नाम रुचिं
नत्यजसिरे मूढ दिव्यरसने ॥श्रीराम॥३॥

सकलजनाऽऽनन्दकर नाम रामेति वद
जिह्वे संप्रार्थये बहुपुण्यमिहते ॥श्रीराम॥४॥

सकल जनोद्धारकर दिव्यवर नाममिह
बहुपुण्य महिमाहि दिव्यरसने ॥श्रीराम॥५॥

दशरथमहाराजो लोकनायकं रामं
पुत्रधियाऽऽह्वयति एहि राम राम ॥श्रीराम॥६॥

कौसल्याप्रेमयुता स्तन्यं पिव हेराम
आशुक्षुधितासिरे क्षीराब्धिशयन ॥श्रीराम॥७॥

दशरथमहाराज कौसल्या पूर्वकृत पुण्य
परिगणना हि शेषेण नहि रे ॥श्रीराम॥८॥

भुवनेश राममिह दशरथात्मजमिति
अज्ञजना विवदन्ति विस्मयमहो ॥श्रीराम॥९॥

श्रीराममनुसृत्य सौमित्रिरनुगमन
परमपुण्यं किमिति वक्तुं नहिरे ॥श्रीराम॥१०॥

कौशिक तपो महिमा गणयितुं नहिशक्यं
यागरक्षण मिति श्रीराम गमनम् ॥श्रीराम॥११॥

श्रीवायुसुत भरतपादपादुकावहनमहिमाहि
किमित रे वक्तुं नहि जाने ॥श्रीराम॥१२॥

श्रीराम पदरजसा गौतम सतीप्रवरा
परिशुद्धाबभूवरे वरस्त्रीरूप धृतवती ।।श्रीराम।।१३।।

शबरी सर्मपित बहुकाल संचित स्वादुफल
भक्षण महिमा श्रीराम न जाने ।।श्रीराम।।१४।।

योगिदुर्लभ रामदर्शन सम्प्राप्ति पुण्यं
शरभंगकृतं किमित वक्तुं नहि जाने ।।श्रीराम।।१५।।

ऋषि कुलाम्बुधिसोम योगि तपोवर वसिष्ठ
कुलगुरुत्व स्वीकार पुण्यमिहाऽद्भुतं ।।श्रीराम।।१६।।

कीश विभीषणौ मित्रदासाविति
परिगृहीत महिमा वक्तुं नहिशक्यं ।।श्रीराम।।१७।।

बहुदेशाऽऽगतमहाराज सदसि जानकीहरणं
अपरिमित पुण्यमिति वक्तुं नहिशंका ।।श्रीराम।।१८।।

कविजन मनोहरण श्रीराम चरित्रामृतं
श्रीकाशीनाथ हृदयानन्द जनकं ।।श्रीराम।।१९।।

—०—

श्रीराम–१६ "कोट्णोत्सव कीर्तनं"
रागं गौले–तालं एक

रामराम रामराम रामराम रामराम,
राम राम राम कोदण्ड राम ।।१।।

भागवत वर पाद धौत पवित्र नीर मग्न मनुज
भागीरथि स्नान कांक्षा किमितिरे वद ।।रामराम।।२।।

भागवत जन पाद सलिल प्रोक्षितेह वर्ष्मणीह
भागीरथि स्नानं किमिति प्रार्थ्यतेऽधुना ॥सीताराम॥३॥

भागवत जन वदनां भोज विनिर्गत
श्रीदिव्य नामाऽमृतपानमत्त धन्य एवहि ॥सीताराम॥४॥

भागवत जन पादपूजा स्नान पान पूत सुजन
गंगास्नान जिगिमिषा हिकथमिहाद्भुतं ॥सीताराम॥५॥

भागवत जन चरणरेणु पूततीर्थं स्नान पान
वरं मनुज भागीरथी जिगिमिषा कथं ॥सीताराम॥६॥

तिष्यकाल मनन्यमनसा श्रीशपाद सेवामग्न
भक्त जन पादधौत नीर जाह्नवी तुल्या ॥सीताराम॥७॥

काशीनाथप्रियवराग्र्च राक्षसांतक श्रीराम
नाम जप सुमग्न धीर पाद सेवनं ॥सीतारामराम॥८॥

—०—

राम—१७ रागं बिलहरी—तालं आदि

## पल्लवि

मन्त्री सुमन्त्र मन्त्रय त्वरितं,
सीताराम पट्टाभिषेकोत्सवं ॥

## अनुपल्लवि

तुलसी मल्लिका जाती विभूषित,
जाज्वल्यमान पीताम्बर परिवृतं ॥मन्त्री॥१॥

## चरणम्

जाम्बूनद नवरत्न सिंहासने,
वीरासनासीनं पश्यामो वयमिह ।
मौक्तिक वर नवरत्न विनिर्मित,
कण्ठ लम्बितहार मणिमयभूषितं ॥मन्त्री॥२॥

वाम भागाश्रित वैदेहीयुतं,
देव सिद्ध ऋषि संघ समावृतं ।
अतुलित बल चतुरंग समाश्रितं,
मंगल दुन्दुभि वाद्यादि घोषितं ॥मन्त्री॥३॥

द्विज मुनि गुरुवर ऋषिगण संकुल,
राज राजाधिराज समन्वितं ।
अतुलितमहिमाऽऽनन्दसम्पत्करं,
सार्वभौमपट्टाभिषेकोत्सवं ॥मन्त्री॥४॥

कनक रत्नघट पूर्ण समाहृत सागरादि
गंगोद्धृत मंगल ।
ऋषिवर वसिष्ठ कराच्च्युत मूर्धनि,
निर्मल तीर्थं पट्टाभिषेकोत्सवं ॥मन्त्री॥५॥

करधृत चामर वाल व्यजन,
श्वेतछत्र सुशोभित मंगलं ।
भरत शत्रुघ्न विभीषण लक्ष्मण,
अंगद जाम्बवत्सुग्रीव सेवितं ॥मन्त्री॥६॥

वायुसुताश्रित पाद सरोरुहं,
जयजय शब्द दिगन्त समाश्रितं ।

सर्वसुलभ जनाह्लाद सुदर्शन,
सर्वं ऋद्धिं देहि दान वरेण्यम् ॥मन्त्री॥७॥
तीक्ष्णाग्र शरोन्मुख रिपुजन,
चरणसमाश्रित मुनिजन संकुलं ।
पक्षद्वयजन साम्राज्यप्रद,
दीन दयापर मूर्ति स्वरूपम् ॥मन्त्री॥८॥

निरपराध्यपराधि जनावन,
मंगल दायक बोध स्वरूप ।
नावलोकयसे मां करुणाकर,
पूर्ण कटाक्षनिजैरव लोकय ॥मन्त्री॥९॥

काशीनाथ सम्मोदक श्रीराम,
कौसल्याऽऽनन्द वर्धक श्रीराम ।
सर्व शुभद पट्टाभिषेकोत्सव,
सर्वं जनानन्द दायक श्रीराम ॥मन्त्री॥१०॥

—०—

राम—१८ रागं शुद्ध बंगाला—तालं आदि

पल्लवि

रामनाम मन्त्रराज हेमनुज श्रुति सुबोधित ॥राम॥

अनुपल्लवि

हे मनुज दुर्लभतर सायुज्य मुक्तिप्रद शुभ ॥रामनाम॥

## चरणम्

ब्रह्माण्डान्तग सकल भुवनजन,
तारण दक्ष श्री सारभूत ।
कालदेश पात्र नियम रहित श्री,
राममन्त्रराज भज भज भजमन ॥रामनाम॥१॥

ब्रह्मानन्दद मन्त्रराज,
काशीनाथाऽऽनन विलसित ।
लीला कल्पित भुवन जन त्रस्त,
कोलाहलशब्द संसृति मोचन ॥रामनाम॥२॥

—०—

राम—१९ रागं श्रीरंजनी—तालं आदि

## पल्लवि

अम्बुज वदन राम-अंगद सुग्रीव भरण ।

## अनुपल्लवि

सुन्द वधू वध कुशल-सुर मुनिगण सेवित ॥अम्बुज॥१॥

## चरणम्

कुसुम वरायुध मोहन कुमुदबन्धुसमसुन्दर ।
कुटिल जन हृदयदूर सुमुख भाषणाग्रगण्य ॥अम्बुज॥२॥

आंजनेय भक्तिगम्य आश्रितपालन दक्ष ।
सकल जन हृदयरमण सकलमुनिहृदयानन्द ॥अम्बुज॥३॥
मंजुलालाप मनोज्ञ-मंजुल तुलसी प्रिय ।
मंदहास काशीनाथ प्रिय-माया मारीचहर ॥अम्बुज॥४॥

—०—

राम—२० "वातापिगणपति" वत्
राग हंसध्वनि—तालं आदि

## पल्लवि

वातात्मजाऽऽश्रितं भजे रामम्
वारणास्य जनक पूजितम् ॥वातात्मज॥

## अनुपल्लवि

भूभार संहरावतारम्भूसुरादि मुनि गणादि सेव्यम्
*भूरिदायकं भूतिसेवितं भूरिदानव कदम्ब भीषणम्
॥वातात्मज॥

## चरणम्

पुरा सुसंहृत दशास्य वदनम्प्रभूषितं
दनुज नाशकरम्पुरारि जलज भवार्चितम्
मूलबल विनाशकम्पुरारि लालित [ स्वादित ] रामाऽमृतम्
प्रणव निनाद वर्णात्मकं-निराश्रयम्

निखिल जीवरूपन्निरवधिकानन्द सुभूषितांगम्
शंकराम्बुजाश्रित [ चित ] काशीनाथं कलुषविनाशक
तेजो रूपं अनादि संसृति छेदक रूपम्
हंस श्रुत ध्वनि भूषित रामम् ।।वातात्मज।। १।।

—०—

राम—२१ रागं यमुना कल्याणि—तालं मिश्रचापु

रामचन्द्र कृपापरिपूर्ण-मदनमोहन सुन्दरम्,
राम नामं सदा भजमन-भक्तिमुक्तिप्रदायकम् ।।रामचन्द्र।। १।।

रामनाम सुधारसं पिब-जन्ममृत्यु जरापहम्,
जन्मकोटि कृताघहन्तव रामनाम सुधोत्तरं ।।रामचन्द्र।। २।।

राम राम कृपां कुरु मयि-जन्मकोटि विनाशन,
राम राम ममाशु वितर ज्ञानघनाऽऽनन्दमेदुरं ।।रामचन्द्र।। ३।।

रामनाम सदा ब्रुवन्मुनि वल्मिकोद्भव सुन्दरं,
व्याधरूप निवारणं प्राप रामनाम जपादिह । रामचन्द्र।।४।।

गौरीरमणस्सदा जपन् वेद रामनामसुधारसम्,
ऐशश्री धनुर्वेत्ति श्रीराम दोर्लता कृत पौरुषं ।।रामचन्द्र।।५।।

गौतम वधूस्वानुभूत श्री चरणकमल रजोगुणं,
वेद शरभंग शबरी गौतम कौशिकादिमुनीश्वराः ।।रामचन्द्र।। ६।।

राम तव नामांकितांगुलि महिमावेत्ति सदाहनुमान्,
भवसमुद्र सन्तारण क्षम नौकारूप जयप्रदम् ।।रामचन्द्र।।७।।

मायामारीच वालि दशमुख दूषण त्रयसूदनं,
विशिख सायक महिमोदन्वान्वेद सम्यक् सन्मुखं ।।श्रीराम।।८।।

कर कलित निजबाणविनिहत दूषण त्रय राक्षसं,
शक्रविजित सुमेघ नाद सुकुंभकर्णमहारथाः ।।श्रीराम।।९।।

शरणमिति सम्प्राप्तरिपुजन त्राणदक्ष विचक्षणम्,
जयन्तसुग्रीवविभीषणो वेत्ति राम सत्यसुभाषणम् ।।रामचन्द्र।।१०।।

काशीनाथ हृदन्तरंगज तमनिरास प्रभाकरम्,
काशीनाथ पदाम्बुजद्वय भक्ति वृद्धि प्रदायकम् ।।रामचन्द्र।।११।।

—०—

राम—२२ रागं नवरसकन्नड—तालं आदि

## पल्लवि

सर्वमंगल कर रामचन्द्र सार्वभौम श्रीसाकेतनिलय ।।सर्वं।।

## अनुपल्लवि

सर्वमहाभय निवारक राम सर्वजनानन्ददायक श्रीराम ।।सर्वं।।

## चरणम्

सूर्यवंशमित्र सूर्यकोटि काश,
सूरिबृन्द नुत सुजनानुकूल ।
सुरुचिरहास सुन्दर वदन,
सुन्दवधू वध सुकुशल राम ।।सर्व।।१।।

त्रिदशाऽरिहर त्रिजगन्मोहन,
त्रिलोकरक्षक त्रिमूर्ति स्वरूप ।
त्रिपुरारिमित्र त्रिदशादि पूज्य,
त्रिदिवादि वन्द्य त्रिदिवेशनुत ॥सर्वं॥२॥

कमनीय करधृत चापबाण,
करुणार्द्रचित्त कमनीय राम ।
काशीनाथहृत्सदन सीताराम,
काशीनाथ मानसाऽऽनन्द जनक ॥सर्वं॥३॥

—०—

राम—२३ रागं नवरसकन्नड—तालं आदि

पल्लवि

दशकण्ठसूदन रामचन्द्र,
दशपापहर दशरथात्मज ॥दश॥

अनुपल्लवि

दिव्यसुन्दर दीर्घ बाहुदण्ड,
कर्णविश्रान्त लोलनेत्रवर ॥दश॥

चरणम्

जनकराजप्रिय जानकीरमण,
विजित जमदग्नि जरारहित ।
जाह्नवी मनोविनोद शंकर,
हृदयाऽऽनन्दकर श्रीरामचन्द्र ॥दश॥१॥

सान्द्र हृदय वारिनिधि चन्द्र,
काशीनाथ सन्तोषजनक ।
कलिकाल जनमुक्ति वितरण,
कनकाऽऽभरण कमनीयगात्र ॥दश॥

—०—

राम—२४ रागं जयन्तश्री—तालं आदि

पल्लवि

जगन्मोहन हे राघव जगन्मोहन ॥
OR
मतिमोहन श्रीराम चन्द्र मतिमोहन ॥

अनुपल्लवि

मारमोह जनक जयसुन्दर,
मायामग्न चराऽचर सन्तारक ॥जगन्मोहन॥

चरणम्

चिन्मुद्रित कर चिदाकाशरूप,
चिदाऽऽनन्दघन चिन्मयरूप ।
चित्र रूपधर चिन्तितफलद,
चिन्ता शोकहर चित्तापहारक ॥जगन्मोहन॥१॥

जन्मादिरोग शान्ति कारक,
जनताप त्रय शीघ्र नाशन ।
जन्हुसुताऽलंकृत जटाजूट,
जान्हवी लोल श्रीकाशीनाथ प्रिय ॥जगन्मोहन॥२॥

—०—

राम—२५ रागं खरहर प्रिय—तालं आदि

पल्लवि

भजभज रघुरामं मानव
भज भज रघुरामं तारक नामाब्धिसोमं ॥भजभज॥

अनुपल्लवि

अवनि सुताऽवनि पालन दक्षम्
दास कुलाम्बुधि पूर्ण शशांकम् ॥भजभज॥

चरणम्

सकल जन्मार्जितदुष्कृत हानम्
सकल जीवाधारं रविकुल सोमम् ।
वरमिह श्रीकाशीनाथ सदास्तुत
वारिज लोचनं वारिधि बन्धनम् ॥भजभज॥१॥

—०—

राम— २६ रागं कथनकुतूहलं—तालं आदि

## पल्लवि

कथन कुतूहल राग प्रिय,
रामनाम महिमा वाल्मीकी सुवेद ।।कथन।।

## अनुपल्लवि

पिब मानव राम नाम सुधाम्
जनि मृति हर निःश्रेयसकर ।।कथन।।

## चरणम्

ध्यानमग्न निरन्तरवहां
राम नाम सुधां पिब मनोहरां ।।कथन।।

—०—

राम—२७ रागं खरहर प्रिय—तालं आदि

## पल्लवि

राम नीरज लोचन निर्मल-निर्मलाऽऽनन्द घन श्रीद ।।राम।।

## अनुपल्लवि

माकुरु रुणमयि निरागसिदी-ने
दीन जनावन दीर्घ सुलोचन ।।राम।।

## चरणम्

कनकाम्बरधर धृत चाप शोभन,
कमनीय विग्रह कनक विभूषण ।
नील नलिनसम कान्तिसमुज्ज्वल,
लावण्य सागर राका शशि मुख ।।राम।।१।।

मायामय दार गृहाराम बान्धव,
स्वजन धन सुत पालन सम्मग्न ।
दास काशीनाथं समुद्धर श्रीराम,
.........त्यक्तं पालय त्वरितं ।।राम।।२।।

श्रीकाशीनाथ हृदन्तग श्रीराम,
सर्व सुदर्शन सदानन्द दायक ।
पावन श्री तव नाम सुमंगल,
पापहरण वालीहरण निपुण ।।राम।।३।।

—०—

राम—२८ रागं नलिन कान्ति—तालं आदि

## पल्लवि

मन व्याकुलं हर प्रभो- मम हृत्तटे विहर श्रीराम ।।मन।।

## अनुपल्लवि

घनश्यामल श्रीजानकी
रमण भार्गव दर्प हरण ।।मन।।

## चरणम्

कर्मोपासना ज्ञान काण्ड मग्न,
वृथा कालहरण भक्तिहीन जन ।
सुलभ फलद प्रेमा भक्ति
सायुज्यप्रद काशीनाथ सेवित ॥मन॥१॥

—०—

राम—२९ रागं देवमनोहरि—तालं आदि

## पल्लवि

नहि भाषसे किं रे राम-नहि भाषसे किं रे-
भाषणे तव हानि किं वद राम ॥नहिभाषसे॥

## अनुपल्लवि

जलज लोचन देवविनुत
देव मनोहरि राग प्रिय विस्मृतं किमु ॥नहि॥

## चरणम्

मामिह दीनं दयापर राम पाहि,
प्रभो निरतिशय सुख स्वरूप ।
नित्य महोत्सव श्रीयुत श्रीराम,
दास काशीनाथ ध्यानगम्य राम ॥नहि॥१॥

—०—

राम—३० रागं सुरुटि–तालं आदि

पल्लवि

नामसुधारस नाद ब्रह्मद्रव परमानन्दाक्रान्त ।।नाम।।

अनुपल्लवि

प्राणायामादि सर्वसिद्धिप्रद ।।नाम।।

चरणम्

याग योग भोग ध्यान समाधि,
वैराग्य ज्ञान त्याग सिद्धिप्रद ।
श्री काशीनाथाऽन्तर्हृदयानन्दप्रद,
राम नामोंकार नादमुक्तिप्रद ।।नाम।।१।।

OR

कृच्छ्र क्रियाफल सुखद काशीनाथ,
हृत्सुख राम नामोंकार मुक्तिप्रद ।।नाम।।१।।

—०—

राम—३१ रागं कल्याणि—तालं आदि

पल्लवि

करावलम्बं देहि रघूत्तम,
पन्नग भूषण परम शिव प्रिय ।।करावलम्बं।।

अनुपल्लवि

मायातीत सच्चिदानन्द लक्षण,
पर ब्रह्मानन्द बोध जनक श्रीराम ।।करावलम्बं।।

## चरणम्

मुक्तिप्रद संतार तारक नाम,
क्षिप्रमुपदिश मा विलंबं कुरु ।
दास काशीनाथ मुद्धर शरणगं,
श्रुत्यन्त चोदित दयापरिपूर्ण ।।करावलम्बं।। १।।

—०—

कृष्ण—१ रागं कथनकुतूहलं——तालं आदि

## पल्लवि

यदुवंश यशोम्बुधि पूर्ण चन्द्र,
यमुना विहार यशोदा तनय ।।यदुवंश।।

## अनुपल्लवि

शरच्चन्द्र सम दिव्य कान्तिमय,
शंकर प्रिय शान्तिदायक ।।यदुवंश।।

## चरणम्

शरदम्भोरुह दल सम नेत्र,
शातकुंभ तेजोज्ज्वलद्वस्त्रधर ।
शेष कुण्डलधर काशीनाथ,
प्रीति संजनक शेषभोगिशयन ।।यदुवंश।। १।।

—०—

संकीर्ण शिव राम कृष्ण—२ रागं मध्यमावति——तालं आदि

## पल्लवि

नाम रसायन पीयूष संपूर्ण ।।नाम।।

## अनुपल्लवि

नाम यशोंकित मधुरातिमधुर,
पातक भवहर कोटि कुलोद्धार ॥नाम॥

## चरणम्

सज्जन संकुल नामजपध्वनि,
लय योगद नर जन्म सुदुर्लभ ।
शिव राम गोविन्द कृष्ण काशीनाथ,
लक्ष्मी नारायण भज ब्रह्मानन्दद ॥नाम॥१॥

—०—

कृष्ण—३ रागं झंझोटि वत्—तालं आदि

चंचल कुण्डल सुकपोल नासिक स्मित मुख ।
नव नवनीत भक्षण सुचतुर बाल कृष्ण ॥१॥
अलिकुल जित श्याम कुन्तलाऽलंकृतं,
अभिनव जलधर सुन्दर देहं ।
अवनत जनावन लोल महोदयं अपरिमेयं ॥२॥
अणिमादि सिद्धि प्रदायक महनीयं
अगणित गुण गण वारिधि चन्द्रां
निगम सुवेद्य सुरासुर वन्दित सुखवेद्यां ॥३॥
मुरली वादन लोल विचक्षण मुनिजन सेवित पदकमलां
मुरभिदि लग्न मनोरथ मनिशं भज श्रीशम् ॥४॥
कटितट कर चरणांचित मणिगण झंझझलं झलतांडव लोलं ।
श्रीकृष्ण तव नाम भजन यशोंकित सुरुचिर कलिहरं
दोषहरं ॥५॥

कमनीय कुचतट कुंकुमालंकृत वल्लवि जन मनोहरं
कारुण्य पयोधर काशीनाथ प्रिय करि प्रियं ॥६॥

—०—

कृष्ण—४ रागं श्रीरंजनी—तालं आदि

पल्लवि

इन्दिरा लोल मुकुन्द इन्दिरा हृदयानन्द ।

अनुपल्लवि

इन्द्रमणि नील देह इन्दिरा वास हृदय ॥इन्दिरा॥

चरणम्

सुन्दरानन्द जनक सुन्दरी जार शुभोदय,
स्वर्ण वर्ण राधिका लोल स्वर्ण पक्ष खगारूढ ॥ इन्दिरा ॥१॥
कलभगमन कलंक रहित कमल जन्म भवनुत,
कमल दिव्य हार शोभन काशीनाथ हृदय तोषण॥ इन्दिरा॥२॥

—०—

कृष्ण—५ रागं हंसध्वनि—तालं रूपक

पल्लवि

मुरहर मुचुकुन्द वरद गिरि वर समुद्धरण ॥

अनुपल्लवि

गज वरद (राम) गज गमन (राम) गरुडारूढ गमन ॥मुरहर॥

### चरणम्

नलिन दल समायित वर दीर्घ लोचन,
जल शयन (राम) जलज मुख जलज भव नुत वरद ॥मुरहर॥ १॥
शर्मद शिव शमल हरण शमन भीति हरण,
शरणग जन श्रीकर श्रीकाशीनाथ सुखद ॥मुरहर॥ २॥

—०—

कृष्ण—६ रागं कल्याणि—तालं आदि

### पल्लवि

सदानन्दं देहि मे परात्पर अम्बुज लोचन
परम सुमंगल ॥सदानन्दं॥

### अनुपल्लवि

पराशर शुक महर्षि पूजित
श्रीपरमानन्द स्वरूप श्री श्रीकृष्ण ॥सदानन्दं॥

### चरणम्

श्रुतिनुत श्रुतदेवर्षि श्रुति गीत दिव्य नाम सुमंगल
मारान्तक मंगल श्रीशिव श्रीकाशीनाथ
श्रीमहामोह प्रद ॥सदानन्दं॥ १॥

—०—

कृष्ण—७ रागं शुद्धसावेरी—तालं रूपक

### पल्लवि

श्रीयदुकुल भूषण प्रभो* मनसिज मोहन ॥श्री॥
श्रीयदुकुल भूषण प्रभो* गोपिका रुक्मिणी

* द्रुतगति

राधिका सेवित पदयुग ॥श्री॥

OR

*गोकुल गोपिका राधिका रुक्मिणी सेवित ॥श्री॥

## चरणम्

वेणुरवजोंकार नाद श्रवण मात्र क्षणज
गेहाहं (कार) मान रहिता नाद लय योग लीना कृष्ण
ध्यान समाधि समन्विता गोप कुमारिका रास क्रीडा
नन्दन महोदधिमग्न सुपूर्णा श्रीकाशीनाथ
दया परिपूर्ण मनोरथ पूर्णा ब्रह्मानन्द
रसामृत पान सुनिश्चल चित्त तदाश्रय ॥श्री॥१॥

—०—

कृष्ण—८ रागं शंकराभरणं—तालं आदि

## पल्लवि

सरस गुण यदुवीरप्रभो ॥

## अनुपल्लवि

सुर सूदन मुनिगेय सुधामय,
मुरलीधर मुचुकुन्द शुभोदय ॥

## चरणम्

बृन्दावन प्रिय कुंज विहरण,
बृन्दारक मुनि बृन्द सुपूजित ।
गिरिवर गिरिधर हृदयगुहाश्रय,
गुरु वर शिव काशीनाथ सम्मोहन ॥सरस॥१॥

—०—

---

* द्रुतगति

कृष्ण—९ रागं —तालं आदि

पल्लवि

कलिलोल भुवन तारण वर नाम-
सकल वृजिनहर ॥कलिलोल॥

अनुपल्लवि

परमावधि निरतिशय सुखद
पतग पति वाह पातक नाश ॥कलिलोल॥

चरणम्

सकलागम वर मुनि गण नुत महदद्भुत गात्र
असुराधिप हिरण्यकशिपु वध कुशल कुबुद्धिहर
असुराग्रिम प्रह्लाद परिपाल रुद्र काशीनाथ
नरहरि रूपधर ॥कलि॥

—०—

कृष्ण—१० रागं कानडा/दरबार—तालं आदि

पल्लवि

कमलाक्ष मां पाहि श्रीरमण,
कनकोज्ज्वलाम्बरधरदेव ॥कमलाक्ष॥

अनुपल्लवि

शम्भु मोहन चारु रूपधर शाम्भवीसहोदर शान्तिप्रद ॥
कमलाक्ष॥

## चरणम्

गदारि शंख चक्र पद्म धर निजभक्त संरक्षणेक्षण ।
विधि शक्र मुख सर्व देवस्तुत काशीनाथ
श्री जगन्मोहन ॥कमलाक्ष॥१॥

—०—

कृष्ण—११ रागं श्रीरंजनी—तालं आदि

## पल्लवि

इन्दु सौन्दर्य वदन इन्दु सदृशाह्लाद जनक ॥इन्दु॥

## अनुपल्लवि

कुंजसदन कुन्द दशन कुंकुमालंकृतदेह ॥इन्दु॥

## चरणम्

इन्द्र नीलाचलदेह इन्दिरा जानि सुभग ।
इन्दु सूर्य समनेत्र इन्द्रादि देव वन्दित ॥इन्दु॥१॥
काशीनाथाऽऽनन्द जनक काम कोटि मोहनांग ।
काम कला पूर्ण रूप कंजासन मोह जनक ॥इन्दु॥२॥

—०—

कृष्ण—१२ रागं रविचन्द्रिका—तालं आदि

## पल्लवि

निरुपम फलद नित्य निर्विकार
नीरज वर नाभ ॥निरुपम॥

## अनुपल्लवि

निखिल सम्पत्कर अखिल सुख प्रद
नीरजासनादि गीयमान वैभवसुकुशल ॥निरुपम॥

## चरणम्

सुविमल सुमानस सुमनस पूज्य,
सुखकर सुन्दर देह समाश्रय ।
कुटिल कुन्तलाऽलंकृत सुवदन
*सूर्य कोटि प्रभ भावुक श्रीकर काशीनाथ सुप्रसन्न ॥
निरुपम॥१॥

—०—

कृष्ण——१३ रागं गाम्बोधि——तालं झम्प

## पल्लवि

परम मिम मुपदेश मिह श्रुणुरे
जनन मरण व्याधि हरणद ॥परम॥

## अनुपल्लवि

निगमान्तोपनिषत्प्रतिपाद्य चित्स्वरूपमिहाद्भुततमं
निगमवन संचार परिखिन्ना शीघ्र दृष्टि पथगमनिशं ॥परम॥

## चरणम्

गोपिका भवनेषु पाण्डव गोपबाल सहस्र सेवितं
गोसहस्र समाश्रितं सदा साधु हृद्गुह संस्थितं ।

---

* द्रुतगति

दाम बद्ध मुलूखलाश्रितं गोपी मानस बद्धमनिशं,
शीघ्रमेव लभेत विचिनुत काशीनाथ हृदब्जगोचरं
।।परम।।१।।

—०—

कृष्ण—१४ रागं शुद्धबंगाला—तालं आदि

### पल्लवि

पूर्णेन्दु रुचिरानन शुभकर
पूरित मुरली नाद विनोदन ।।पूर्णेन्दु।।

### अनुपल्लवि

चतुरानन पुरन्दर मदहर,
मदनगोपाल श्रीमारजनक जय ।।पूर्णेन्दु।।

### चरणम्

भाराऽधिक रुचिरांगद भूषण,
कौस्तुभ मणिधर मणिमय भूषण ।
मधुराऽऽश्रित मधुराकृति मानिनि,
मानस नयनानन्द कर जय ।।पूर्णेन्दु।।१।।

करुणार्णव परिपूर्ण सुधाकर,
पूरित दधिपय नवनीत चोर ।
कमनीय नीरद सुन्दर विग्रह,
श्रीवत्स लांछन श्रीकर शरणद ।।पूर्णेन्दु।।२।।

कंकण केयूर कटक विभूषण,
मणिमय मकुट सुशोभित मस्तक ।
कलि कलंक नुद कामारि प्रिय,
काशीनाथ स्तुत काशी जन प्रिय ॥पूर्णेन्दु॥ ३॥

—०—

संकीर्ण प्रार्थना—१५ रागं पुन्नागवरालि—तालं आदि

### पल्लवि

याचे सद्भक्ति भगवन् सद्बुद्धि देहि ॥

### अनुपल्लवि

साधु सद्गुरु कृपा परि पूर्णं
श्रीमद्भगवद्भजन पराधीनं ॥याचे॥

### चरणम्

मामुद्धर त्वरितं पातक पंजर मध्यगतं ।
गर्भवास इव बन्धित देहं रूपं दर्शय क्लेश हरंपरं ॥याचे॥ १॥
संसृति सागर पोतं देहि नाम भजन रूपं ।
नाना योनिषु जन्म गृहीतं अलमल मिति तरां तारय दीनं
॥याचे॥ २॥
काशीनाथ दासंडिभं डंभविडम्बित स्वान्तं ।
रामराम जय राधावल्लभ मां पालय शिव शंकर शंभो
॥याचे॥ ३॥

—०—

लक्ष्मीनारायण—१६ रागं मध्यमावति—तालं आदि

## पल्लवि

कोजागरी लक्ष्मी विलास भूत,
कुंकुम चर्चितं गोविन्दम् ॥

## अनुपल्लवि

कुंज विहारं कुंचित केशं कुन्तलाऽलंकृतं गोविन्दम्
कंसहरणं कंजविलोचनं कोमल हृदयम् ।
मंजुलास्यं मन्दस्मेरं मधुहरण श्रीगोविन्दम्
स्वात्मानन्द जनकं गोविन्दम् ॥कोजागरी॥

## चरणम्

कारुण्य सागरं कमनीय देहं कलिमल शोषणं गोविन्दम्
केशि पूतना शकट तृणावर्त वत्स भंजनं गोविन्दम्
गोपी वस्त्रापहरं गोविन्दं नन्द विमोक्षणं गोविन्दम्
मन्दहासं मुरहरं दानवकुल भीकरम्
दारित कुवलया पीडम् ॥कोजागरी॥१॥
दावाग्नि तृणावर्त कालीयदमनम्
गोवत्स पालकं गोपालम्
प्रलम्ब धेनुक चाणूर मुष्टिक
अघहरण श्रीगोविन्दम्
राधाविलोलं राजीवलोचनं रमणीयवेषं गोविन्दम्
कम्बुग्रीवं कमनीयं श्रीकाशीनाथाऽति प्रियम्
ब्रह्मानन्द जनकं गोविन्दम् ॥कोजागरी॥२॥

—०—

लक्ष्मीनारायण—१७ रागं मध्यमावति—तालं आदि

## चरणम्

कोल्हापुरी लक्ष्मी विहार भूतं
शंख चक्रांकितं गोविन्दं ।
श्रीवत्स कौस्तुभ पद्मगदाधर
शार्ङ्ग वनमाला भूषितम्
मधुकैटभाऽसुर भंजन शरणद
शरणागत जन पालकम् ।
दीन जनावन दक्षं दीर्घसम्पत्प्रद गोविन्दम्
पाप हरण गोविन्दम् ॥कोल्हापुरी॥१॥

कमल सुलोचन कमल चरण श्री
कामाति सुन्दर मोहनम्
यमि बृन्द सेवितं यमुना विहारम्
यम भय हरण श्री यतिपूज्यम्
कार्य स्वरूपं काम जनकं कल्याण कारणम्
कंजनाभं कंज सुनेत्रं चारु हासं चारु वदन श्रीगोविन्दं ॥२॥

करुणा पयोनिधि पूर्ण शशांकम्
कमलाऽऽयताक्षं कल्याण शोभनम्
काशी निवासिनं काशीनाथ पूज्यम्
कालीय भंजनं करिवरदं अमित सुकान्तिदम्
आश्रित पोषणं सदासेव्यं सदा नौमि
सच्चरित्रं प्रसन्न वदनाम्भोजम् ॥कोल्हापुरी॥३॥

—०—

कृष्ण—१८ रागं जौनपुरी—तालं एक

## पल्लवि

यमि जन वन्द्य परम पुरुष-यमिजन वन्द्य ॥

## अनुपल्लवि

यमलार्जुनहर कालीयदमन
गंगा गाम्भीर्यं गांगेय वरद ॥यमिजन॥

## चरणम्

तन्त्रि संभूत नाद बिभूषित वल्लकिवाद्यविघोषित महिमा ।
कमला वल्लभ कामित वरदकम्बुकण्ठ कंजविलोचन ॥यमि॥१॥
साधु संवेद्यदिव्यस्वरूप सर्वजनस्वान्त तेजोविभासक ।
नयनावरण नाद स्वरूप नादसुवेद्य श्रीनादान्तवेद्य ॥
यमिजन॥२॥
सर्वस्वतन्त्र कलिपत भुवन कल्क्यवतार स्वरूप ।
परमानन्द सच्चिदाकाररूप कलिमलशोधन काशीनाथ
जय ॥यमि॥३॥

—०—

कृष्ण—१९ रागं यमुनाकल्याणि—तालं त्रिपुट चापु

## पल्लवि

नन्द नन्दन नामकीर्तनं नत जनाघ निवारणम् ।

## अनुपल्लवि

नारदादिभिर्गीयमान सुमंगलं सुखदायकम् ॥नन्द॥

## चरणम्

स्निग्ध नीरद श्याम सुन्दरंचिकुर कुन्तल भूषितम्
मृगमदांचित फालदेशं मन्द सुस्मित वदन मण्डलम् ।। नन्द ।। १ ।।

कुन्दमुकुलसुश्वेत रदनं कुवलयापीड मर्दनम्
क्रूर दानव मर्दनं शुभचिन्तनं मुनिरंजनम् ।। नन्द ।। २ ।।

कंस चाणूर मल्ल नाशनं कलिकलंक निवारणम्
कटि परिवृत पीत चेलं करि करोपम बाहु दण्डम् ।। नन्द ।। ३ ।।

अंगुलीयक कटिविभूषित रणितमणिगणसूत्रकम् ।।
कंठ विलसित हार कौस्तुभ श्रीवत्सांकित वक्षसंम् ।। नन्द ।। ४ ।।

गोपवर वधू कुचविमर्दन गोपिका बृन्द सेवितं ।
गोपिका रमयन्त मनिशं गोरसादिपिबन्त मनिशम् ।। नन्द ।। ५ ।।

सात्त्विकोद्भव नारदादि परिवृतं यदुनन्दनम् ।
साधनादि सुसिद्ध ऋषिगण सर्वसिद्धि प्रदायकम् ।। नन्द ।। ६ ।।

उरग राजपर्यंक शायिनं उरग रिपुवर वाहनम्
उरग लोक निवासिनं निगमादि संस्तुत विग्रहम् ।। नन्द ।। ७ ।।

कलय कलय कल्याणमनिशं कलय चरण सरोज भक्तिम्
काशीनाथ हृदम्बुजाश्रय भक्ति मुक्ति प्रदायकम् ।। नन्द ।। ८ ।।

—०—

कृष्ण—२०  रागं मध्यमावति—तालं रूपक

## पल्लवि

भ्रमर कालकाऽलंकृताऽऽनन
राधा मनोऽनुग नर वर ।। भ्रमर ।।

## अनुपल्लवि

ब्रह्मानन्द रस पूरित वेणु वाद्य लोल विजय ॥भ्रमर॥

## चरणम्

भुवनजनमनमोहकोंकार नादपूर्णं ।
काशीनाथ स्तुति बृह्मित वंशी वाद्य भूषित कर
॥भ्रमर॥१॥

—०—

कृष्ण——२१ रागं हिन्दोलं—तालं आदि

## पल्लवि

मामव जगदीश* मंजुल पद युग
मन्दहास वदन ॥

## अनुपल्लवि

माधव मधुमुर हरण निपुण *मनसिज सुन्दर
*मन्दरोद्धारक ॥मामव॥

## चरणम्

सामगान रसिक* सरसिज लोचन
सागर सुख शयन ।
सनकादि सेवित मंगल विग्रह
*सत्य संकल्प श्री सद्गुण बृन्द ॥मामव॥१॥
संगीत सुख लोल* संयमिसेवित
संग रहित स्वान्त ।

* द्रुतगति

संसृति मोचन सन्ताप नाशन
संकल्प रहित श्रीपाद पंकेरुह ॥मामव॥२॥

काशीनाथपाद *भक्ति प्रदायक
कांक्षित सिद्धिप्रद ।
काल भीति हर काशीनाथ प्रिय
काम पूरक कलिमल भेदक ॥मामव॥३॥

—०—

कृष्ण—२२ रागं केदार—तालं रूपक

## पल्लवि

पालय गोपाल बाल कृष्ण* मनसिज मोहन सुन्दर ॥

## अनुपल्लवि

आश्रयामि सदा बालं* रक्षण पटुतर धीरं ॥पालय॥

## चरणम्

मन्दहास वदनं* मदगज समगमनं
मृगमद तिलक सुफालं ॥
मंगलालयाघ नाशं *मणिमय मकुट विराजित-
मंगल दायक बालं ॥पालय॥१॥
कौस्तुभमणिहारं* कटकांगद मणिवलयं,
नूपुर कटि सूत्रं ।
करुणा रसादि पूर्णं* कामित पूरक लोला कमल-
विलोलं बालं ॥पालय॥२॥

---

* द्रुतगति

दानव कुल कालं* दानव रिपुतोषकरं,
दारित कुवलया पीडं ।
दानव पति धन हरणं* दीन जनावन लोलं-
वामन पटुतर रूपं ॥पालय॥३॥

राजीव दल नयनं* राधा नयन महोत्सवं,
रंजित गोप बालं ।
राज राज शेखरं बालं* रजत गिरीश्वर-
काशीनाथ कृपा परिपूर्णं ॥पालय॥४॥

—०—

कृष्ण—२३ रागं मध्यमावति—तालं आदि

गोधूलि भूषित गोविन्दम्भज
गोवर्धनोद्धारं गोविन्दम्
गोरूप धारणं गोकुल पोषकम्
गोपाल वर्धनं गोविन्दम्
चरणाऽमृतोदक पान सुनिर्वृत
मुनिजन स्वान्त सुनिर्मलम्
सुन्दरांगं सुखरूपं सुनन्द प्रियकर गोविन्दम्
गीर्वाण मोददं गोविन्दम् ॥गोधूलि॥१॥
द्वारका नायकं सारंग लोचनम्
सच्चिदानन्द चिदाकाशम्
साम्राज्य दायकं सज्जन पोषकम् [सेवितं]
सनकादि योगि सुसंयुतम्
सज्जन सेवित सद्गति दायकं

---

* द्रुतगति

शंकर प्रिय करं संगहरं सान्द्रानन्दं संगहीनम्
संगर विजित सुदुर्मदं सान्दीपनी प्रिय गोविन्दम् ॥गोधूलि॥२॥
कामनिषूदन कालसंहार श्रीकामाक्षी प्रियकरं
काशीनाथं विमोह कारकम्
दिव्य रूपधरं काशी सुमध्यग माधवं
काम दायक कामारी प्रियकर
कल्याण रूप सुमंगलं
कंबुजाक्षं कूर्म रूपं कलंक हरण श्रीगोविन्दम् ॥गोधूलि॥३॥

—०—

संकीर्ण—२४ रागं सारमती—तालं आदि

पल्लवि

मोक्षमूलरसं पिबरे जीव
नाम सुधारसं पिबरे ॥

अनुपल्लवि

आत्माऽनात्मविचार सुसम्प्राप्य
ब्रह्मानन्द स्वरूप सुदुर्घट ॥मोक्ष॥

चरणम्

विष्णु शिव परमात्म जीवाऽभेद
साधन वेदान्त वैराग्य ज्ञानज ।
योगिचिन्त्य स्वात्मप्रकाशक
काशीनाथ हृद्गत राम [कृष्ण] नाम ॥मोक्ष॥१॥

—०—

संकीर्णं–२५ रागं शंकराभरणं–तालं आदि

## पल्लवि

स्वररागज (नादज) सुधारस परिपूर्ण मानव धन्यतमहेमनुज ॥
स्वर॥

## अनुपल्लवि

नाभिकमलज कण्ठ विजृंभित नादाऽऽनन्दघनहेमनुज ॥स्वर॥

## चरणम्

सत्वोदात्ताऽनुदात्त रजोगुण तमोगुण स्वरितमूर्तित्रयात्मक ।
ब्रह्म गुरूदित वेदवेदार्थज्ञमानवधन्यतम हेमनुज ॥स्वर॥१॥
तन्त्री वीणा कण्ठ विनिर्गत सरिगमपधनिसप्तस्वराश्रित ।
नादाऽऽनन्द सुधारससम्मग्नमानवधन्यतम हेमनुज ॥स्वर॥२॥
कर्णध्वनिजन्यदिव्यघण्टारव श्रवणनिर्वृतस्थिरनिर्मलस्वान्त ।
ध्यान लय योग समाधि संसिद्ध मानवधन्यतम हेमनुज ॥स्वर॥३॥
नाद लहरी सर्व तीर्थ वर विमल गंगास्नान संसृति मोचन ।
नाद जीव ब्रह्मैक्य संप्रापक काशीनाथ सेवा हेमनुज ॥स्वर॥४॥

—०—

कृष्ण–२६ रागं तिरुप्पुगल्वत्–तालं एक

कनका चल सम कान्तिविराजित कनक चेल,
करिराजाऽवन कांक्षितफलद कमला नाथ ॥१॥
कालियभंजन कालिन्दीतट कुंजविहार,
कम्बुग्रीव कलिमलशोषण कमल नाभ ॥२॥

मनसिजकोटि मनोहर सुन्दर मां पाहीश,
मृगमदतिलक मनसिज जनक मृदुदेह ॥३॥
गोपिका वल्लभ गोकुलनिलय गोप बाल,
गोपाल गोरूप धारण निपुण गान लोल ॥४॥
नारद वन्दित चरण सरोरुह नाद रूप,
नानापातक नाशनपटुतर नामधेय ॥५॥
विगत विमर्शन विदुर कृपाकर वेणुलोल ।
विनिहत दारुण पाप कदम्बक विगत मोह ॥६॥
यमलार्जुन वरदाऽभयदायक यमिरूप,
यशोदा बाल यतिजन सेवित याग रूप ॥७॥
कौन्तेयाऽनुग कौशिक वर नुत कूर्मरूप,
कौमोदकीधर कौस्तुभमणिधर नील वर्ण ॥८॥
सकलाऽमर वन्दित मृदुपद सरोजनेत्र,
सरोज पद युग सरोज भवनुत सनकरूप ॥९॥
काशीवासि जनावन चतुर काशीमध्यग,
काशीनाथ कृपाकर शंकर कंस नाश ॥१०॥

—०—

कृष्ण–२७ रागं तिरुप्पुगल्वत्–तालं एक

कंकण भूषण किंकिणिघोषित कटिदेश,
कस्तूरितिलक कामितफलद कामतात ॥१॥
नूतन जलधर सुन्दर काय सुजन त्राण,
यमिजन सेवित यम भय नाशन गोप बाल ॥२॥
घोषित घोष गोकुल निलय गोपवेष,
गोरूपधारण गोकुलपोषण गोपी लोल ॥३॥

अंचित पिंछाऽलंकृत चूड आर्तिनाश,
आनन्दतुन्दिल नर्तन चतुर आगमान्त ॥४॥
मन्दर गिरिधर मन्मथ सुन्दर नन्दनन्दन,
नन्दित मुनिजन नगवरोद्धार नानालील ॥५॥
रमाधव रासमहोत्सव राधालोल,
गोलोक निलय गोवत्सपालन गंगाजनक ॥६॥
करुणां कुरु मयि कालिन्दीतट कुंजविहार,
काशीनाथ नुतिप्रिय वरद करुणा पूर ॥७॥

—०—

कृष्ण—२८ रागं मोहन (वत्)—तालं एक

गोपरक्षक गोकुलोद्धार गोपबालकादिरूपधारणावन ॥१॥
नन्दनन्दनाऽऽनन्ददायक नन्दितामरादिसुनन्द वन्दित ॥२॥
गोपिकापते गोपबालक गोकुलाऽवतीर्ण कृष्ण लोकरक्षक ॥३॥
रुक्मिणीपते रुक्म कंकण रुक्मवसन रुक्मभूषण रुजापहारक ॥४॥
कंसमर्दन कंजलोचन कम्बुकण्ठ कमठरूप कलिमलापह ॥५॥
नारदार्चित नाकपूजित नागशयन नागदमन नाम वैभव ॥६॥
शम्भुमोहन शंकरप्रिय शमितदानवादि वर्ग शान्तिविग्रह ॥७॥
कामितार्थद कमललोचन काशीनाथ हृदय वास कार्य-
साधक ॥८॥

—०—

कृष्ण—२९ रागं यमुना कल्याणि—तालं एक

राधिका मनोहर रामसोदरराधिका वल्लभ श्रीरामणीयक,
राज राजार्चितपादपल्लव रम्यगानरम्यसुगुण रम्यरूप ॥१॥

गोपिका नयन चन्द्र गोकुलावतंस गोपिकागानलोलप्रीतिदायक,
गौतमादि सिद्धसंघ तापनाशन गोपिका गोप गोवर्धनोत्सव ॥२॥
फाल कस्तूरी तिलक फणिराजशयनफुल्लपंकेरुह दल लोचन,
फुल्लपुष्पादिघटित वनमालिकाधरफुल्ल पंकेरुह श्रीकरचरण ॥३॥
कालमेघ नीलवर्ण कम्बुग्रीव श्रीपते कालियादि काकदमन-
कामदायक ।
कार्यकारणादिरूप कमलावल्लभ काशीनाथ सेव्यमान-
पादपंकज ॥४॥

--०--

कृष्ण—३० रागं यमुना कल्याणि—तालं एक

वेणुगान लोल श्री नन्दनन्दन वेद वेदांगनिखिलसारभूत,
वेद तत्त्वार्थं निरत हंससेवित वेदविद्यास्वरूप भूसुराऽश्रय ॥१॥
शारद चन्द्रनिशाभवाऽग्रगण्यशारदा जानि जनक श्यामसुन्दर,
जाह्नवी जानिप्रिय मोहिनी रूप मोहनाऽवतार कृष्ण काशीनाथ
मोदद ॥२॥

—०—

कृष्ण—३१ रागं यमुना कल्याणि—तालं एक

पाहि पाहि परम पुरुष पार्थ सारथे,
पाहि पाहि पन्नगाश तार्क्ष्य वाहन ।
पाहि शरण दीन त्राण पाप नाशन,
पापराशि तूलदहन पारदर्शक ॥पाहिपाहि॥१॥
आगमाद्यखिलदेह निगमान्तसंश्रित,
नील यामुनाविहार धीरनित्यतृप्त ।

नील देह नीलचिकुर नीलिमा हर,

निर्मलानन्द कन्द रम्यविग्रह ॥पाहिपाहि॥२॥

कामकोटि सुन्दरांग कंजलोचन,

कालमेघश्याम वर्ण कलित विग्रहं ।

कांचिनूपुरादि शोभ कंसनाशन,

कलि मलापकर्ष नामवैभव प्रभो ॥पाहिपाहि॥३॥

काशीनाथ सेव्यपाद कालनाशन,

कालदमन शंभुप्रिय कान्तिदायक ।

कांची नूपुरादिशोभ कलि विमोचन,

मन्दराद्रि वहन दक्ष मंगलकर ॥पाहिपाहि॥४॥

—०—

कृष्ण—३२ रागं खरहरप्रिय—तालं आदि

## पल्लवि

भजभज यदुवीरं मानव

मानस भवाब्धि सन्तारं ॥भजभज॥

## अनुपल्लवि

सनक मुखाम्बुज निर्मल भानुम्

जलरुह नीलं जलज मुखेक्षणम् ॥भजभज॥

## चरणम्

विद्युन्मणिनिभ कान्त शरीरम्

विजय जयप्रदं विमल चरित्रम् ।

शतमख संस्तुत चित्र चरित्रं,

श्रीकाशीनाथ पुरीमध्यसंस्थितम् ॥भजभज॥१॥

—०—

कृष्ण—३३ रागं श्रीरंजनी—तालं एक

सुन्दराऽऽनन्द कन्द सुन्दरी जार लोल ॥

नन्द गोप कुमार नन्दराज प्रियद ॥१॥

शंकराऽऽनन्द जनक शन्तनु सूनु प्रिय,

शारदा जानि नुत शान्ति दान्ति धनद ॥२॥

अंगना मणि लोल अम्बुज लोल नयन,

अम्बुज नाभ वरद अम्बा यशोदा लग्न ॥३॥

अम्बरीष प्रसन्न अंजना सूनु प्रिय,

आगम वेद्य सुलभ अणिमादि सिद्धिद ॥४॥

पंक्ति पावन नाम पंक हरण चण,

पंकेरुह समान दिव्य सुन्दर मुख ॥५॥

पन्नग रिपु वाह पापतूल दहन,

पामरार्त्ति दहन पण्डित परिपाल ॥६॥

रुक्मिणी वल्लभ श्रीरुक्मिमान हरण,

रुक्मवर्ण श्रीराधा प्राण नायक लोल ॥७॥

कामिनी मोहनांग कामकोटि जितांग

कामकोटि सुरम्य काशीनाथाधिवास ॥८॥

—०—

कृष्ण—३४ रागं देश्—तालं आदि

पल्लवि

पण्ढरीं यामो वयमिह धन्य-पण्ढरीं यामो ।

## अनुपल्लवि

पण्ढरी भुवि ख्यात महिमा पुण्डरीक वरप्रद ॥पण्ढरीं॥

## चरणम्

चन्द्र भागा भीमा नदी मध्यशोभे रुक्मिणीहरि ॥पण्ढरीं॥१॥
पण्ढरी सम पुण्य नगरी लोके नहि मनुजा रे ॥पण्ढरीं॥२॥
पाण्डुरंग राजधानी कोटि जन्माऽघहारिणि ॥पण्ढरीं॥३॥
पण्ढरी नामसम्पूर्णा नाममन्त्रसिद्धिदायिनि ॥पण्ढरीं॥४॥
नाद लय योग दायिनि नाम ब्रह्म रूपिणीरे ॥पण्ढरीं॥५॥
नाना मोह हारिणीरे ब्रह्मानन्द दायिनीरे ॥पण्ढरीं॥६॥
नारदादि सिद्ध सेवित नाम घोष सम्पूर्णरि ॥पण्ढरीं॥७॥
पण्ढरी पतिताऽघहारिणी सर्वजन मुक्तिदायिनी ॥पण्ढरीं॥८॥
सर्वजन मोहिनीरे सर्वकल्याण प्रदायिनि ॥पण्ढरीं॥९॥
विट्ठल नाम संकीर्तन ध्वनि सम्पूर्ण गोष्ठीरे ॥पण्ढरीं॥१०॥
सेवनीया माननीयाश्लाघनीया भक्तिगम्या ॥पण्ढरीं॥११॥
सेबिता सकृदेव पण्ढरी धन्यामन्यामहेवयं ॥पण्ढरीं॥१२॥
पण्ढरी रुक्मणी विट्ठल काशीनाथ भक्तिदायक ॥पण्ढरीं॥१३॥
काशीनाथ सेवा महिमा विट्ठल भक्ति प्रदायक ॥पण्ढरीं॥१४॥

—०—

कृष्ण—३५ रागं आनन्द भैरवि—तालं एक

वेंकटाद्रि शिखर निलय श्री गोविन्द ।
युगल स्त्रीशोभन स्त्रीपद ,, गोविन्द ।
दासजनोपरि दयाकर ,, गोविन्द ।
दासजन प्रार्थ्य वर प्रद ,, गोविन्द ।

बहु जन्मान्तरीय रोगहर श्री गोविन्द ।
सन्तति प्रतिबन्ध हरण ,, गोविन्द ।
सर्वभयापह वर प्रद ,, गोविन्द ।
कलियुग प्रत्यक्ष दैवमिह ,, गोविन्द ।
कलिमल हरण श्रीत्वमेवहि ,, गोविन्द ।
प्रबल तर रिपु निग्रह ,, गोविन्द ।
भक्तजन तारक त्वमेवहि ,, गोविन्द ।
पातक ध्वंसन श्रीपते ,, गोविन्द ।
पतित पामर जन समुद्धर ,, गोविन्द ।
श्रीकाशीनाथ भक्तिप्रद ,, गोविन्द ॥

—०—

कृष्ण—३६ रागं पन्तुवरालि—तालं आदि

### पल्लवि

यदुकुल भूषण यमुना विहार
युवति गोपिका सदा विहरण ॥

### अनुपल्लवि

निरतिशयानन्द निर्मल स्वरूप
नित्यानन्द महोदधि पूर्णचन्द्र ॥यदुकुल॥

### चरणम्

अह मह मह मिति मोह वारुणि जन्य
उन्मादज काशीनाथं समुद्धर श्रीश ।

परमाति विपुल विपद्गण सम्मग्न
निजजन पोषण विरामरहित श्रीश ॥यदुकुल॥१॥
नगधरमन्दरधर धरणीधर गोगोपकुमार रूपधर ।
उमाधर [धव] श्रीकाशीनाथ दयापूर्ण काशीनाथ दासं
मा विस्मर श्रीश ॥यदुकुल॥२॥

—०—

कृष्ण—३७ रागं नलिनकान्ति—तालं आदि

### पल्लवि

शमन स्वसा तटे कुंजे विहरसि किम् ?
नहि मे हृत्तटे ॥शमन॥

### अनुपल्लवि

धमनीलता संकुल कुंजे हृन्नीलयमुना
कूल पुलिनगे ॥शमन॥

### चरणम्

नाना मनोरथ गोपी युवती कोटि युत क्रीडां
न करोषि किम् ?
कुरु राधिकाप्रिय रास क्रीडां
काशीनाथ हृद्विशद कुंजगृहे ॥शमन॥

—०—

कृष्ण—३८ रागं हरिगाम्बोधि—तालं एक

### पल्लवि

निगमान्तोंकार निर्मलानन्द श्री दामोदर शौरे ॥

## अनुपल्लवि

सकल गुणाश्रय लोकविनिन्दित,
त्वत्कृत कर्म तवोचितं किं वद ॥निगम॥

## चरणम्

गोपिका सदन मुपेत्य प्रतिदिनं,
दधिपय नवनीत भाण्ड विस्फोटनं ।
प्रतिगृह मनाहूत गमन मनुचितं,
दधिपयनवनीतमोषणं किमुचितं ॥निगम॥१॥
गोपिकावेणि समाकर्षणं तव,
नोचित मंशु कर्षणं ते कृष्ण ।
वेणुरव श्रुत मात्र विमोहिता,
गोपिका सर्वा निशीथ समागता ॥निगम॥२॥
रास क्रीडा मनुभूय त्यक्त्वा कथं,
नोचितमिह कुरुषे वद शीघ्रं ।
शरणग गोपिका त्राणं तवोदितं,
विस्मृतं किं नकरोषि किं कारणं ॥निगम॥३॥
नन्द विमल यशो हानि प्रदं खलु,
त्वत्कृत कर्मं तवोचितं नहि नहि ।
शरणग जनाऽपराधविमोक्षणं,
नकरोषिकिमितिरे श्रीराधाकृष्ण ॥निगम॥४॥
दास काशीनाथ मानस चौर्यं,
चिरकाल प्रार्थितं नकरोषिकिमिति ।
तस्य मनश्चौर्यं कार्यं मुहुर्मुहुः,
तवयशो लाभमतीव शुभप्रदं ।.निगमोंकार॥५॥

—०—

हनुमान्—१ रागं अठाणा—तालं आदि

## पल्लवि

वीर हनुमन्त जय जय वीर हनुमन्त
*सर्व गुणोदधि पूर्ण सुधाकर ॥वीर॥

## अनुपल्लवि

वैरिवर्ग कुल भर्जन वरगुण
विश्वमोदकर श्रीकर हरप्रिय ॥वीर॥

## चरणम्

वीर दनुजहर मंगलदायक,
विश्वरूपधर विमल सुशोभन ।
बुद्धिवीर्य बल शौर्य विधायक,
काशीनाथ पुर शोभित सर्वग ॥वीरहनुमन्त॥ १॥

—०—

हनुमान्—२ रागं देश्—तालं आदि

## पल्लवि

अंजना प्रिय कुमार वायु पुत्र लोकमान्य ।

## अनुपल्लवि

प्रबल दैत्य हन्तृ हनुमन् जानकी श्रीराम सेवक ॥अंजना॥ १॥

---

* द्रुतगति

## चरणम्

वीतराग वीतमोह विपुलयश विश्वमोहन ॥अंजना॥२॥

सकल लोक पूज्यपाद कामरिपु मोहनश्री ॥अंजना॥३॥

कांचनाद्रि समगात्र गान्धर्व विद्या प्रवीण ॥अंजना॥४॥

काशीनाथ प्रीतिजनक गानमोहित विश्वेश ॥अंजना॥५॥

—०—

हनुमान्—३ रागं सारंग—तालं आदि

## पल्लवि

पंच वदन हनुमन् जय जय पंचतत्वकाश ।

## अनुपल्लवि

सर्वायुध परिपूर्ण दयाकर

मंगल भाग्य प्रदायक हनुमन् ॥पंचवदन॥

## चरणम्

भक्त परिपालन जयजय भावुक दानरत ।

भास्कर तेजोज्ज्वलदनलाभ भवभय-

हरण कुतूहल मतिमन् ॥पंचवदन॥१॥

परम योगिवर्य पवनज पतित पाप नाश ।

प्रार्थित रघुवर दासानुकूल रघुवर निजजन

भक्ति प्रदायक ॥पंचवदन॥२॥

अरुण दल विल्वार्चनरत काशीनाथ पूज्य ।

दास वराग्रज दास वराश्रय भक्ति सुगम्य

श्रीकाशीनाथाऽनुग ॥पंचवदन॥३॥

—०—

हनुमान्—४ रागं हुसेनी—तालं आदि

## पल्लवि

वन्दे श्रीरामदास हनुमन्तम्
राम ध्यान लसिताम्बुज हृदयम् ॥वन्दे॥१॥
पश्यन्तं श्रीरामस्वरूपम्
सर्वात्मक परमात्म स्वरूपम् ॥वन्दे॥२॥
दिनकर मण्डल भक्षण चतुरम्
परमानन्द पुलकांकित देहम् ॥वन्दे॥३॥
वायुकुमारम्प्रणत जनाधारम्
सुग्रीव सचिवम्महाद्भुत रूपम् ॥वन्दे॥४॥
रावण बल मान तेज हरम्
बुद्धि शौर्यबल धैर्यसमन्वितम् ॥वन्दे॥५॥
काशीनाथ हृदयाम्बुज विलसितम्
राम पदाम्बुज सेवा धुरन्धरम् ॥वन्दे॥६॥

—०—

हनुमान्—५ रागं कानडा—तालं आदि

## पल्लवि

भजे हनुमन्तं श्रीराम दासम्
निजभक्त भरणं निर्मल चित्तम्॥भजे॥१॥
इन्द्रिय निग्रह मिहाऽमुत्र फलदम्
ईति भीति हर मीप्सित दायकम् ॥भजे॥२॥
वैराग्य ज्ञानदं वैभोग प्रदम्
विशद बुद्धि प्रदं विश्वमंगलदम्॥भजे॥३॥

श्रीकाशीनाथ मुख प्रविलसित
राम भक्ताऽग्रिमम्भाग्य प्रदायकम् ।।भजे।।४।।

—०—

हनुमान्—६ रागं जौनपुरी—तालं आदि

## पल्लवि

भवभीमा बलभीमा-अनन्त तव गुण महिमा रे ।।भव।।१।।
अखिल ब्रह्माण्डग जगत्परिपालन,
श्रीरघुवीर समान पराक्रम ।।भवभीमा।।२।।
राक्षस कोटि समूह प्रभंजन,
श्रीराम नाम सुधारस लम्पट ।।भवभीमा।।३।।
राम कथामृत पान प्रहर्षित,
राम प्रताप जगत्प्रति पादक ।।भवभीमा।।४।।
हरिगुण वर्णन वाक्पटुत्व प्रद,
धैर्य परिस्फुरणादि फल प्रद ।।भवभीमा।।५।।
श्रीराम नाम सदा जपतत्पर,
श्रीकाशीनाथ सम्पूजनतत्पर ।।भवभीमा।।६।।

—०—

हनुमान्—७ रागं आरभि—तालं आदि

## पल्लवि

हनुमन्तं रणचण्डं सर्वगुण श्लाघ्यतमम् ।
वायुसुतं रोगहरं बालार्काऽयुतदीप्तम् ।।हनुमन्तं।।१।।

सीतान्वेषण चतुरं सीताशोक विनाशम् ।
अक्षहरं अक्षयदं हारविभूषित देहम् ।।हनुमन्तं।।२।।
धैर्यप्रदं धीमन्तं धीर वरं श्रीदं तम् ।
शौर्यं प्रदं बल बुद्धि बुधजनाऽऽह्लादकरम् ।।हनुमन्तं।।३।।
प्रणत करम्प्रणमन्तम्प्रणतोस्मि निर्भयदम् ।
प्रजपन्तं राममन्त्रं काशीनाथाऽऽश्रितपक्षम् ।।हनुमन्तं।।४।।

—०—

हनुमान्—८ रागं खरहरप्रिय—तालं आदि

## पल्लवि

भज भज हनुमन्तं (मानस), श्रीरामपदाब्ज वरदासम् ।।(मानस)
भजभज।।

## अनुपल्लवि

भुवन जनाश्रित ताप हरणं-तारितोदधि श्रीरुद्र रूपम् ।।भजभज।।

## चरणम्

विनता सुताऽरुणतेजो विभूषितम्
विश्वरूपधर विमल चरित्रम् ।
विदेहसुतादिव्य कटाक्ष संपूर्णम्
श्रीरामदास वराग्रिमं धीरम् ।।भजभज।।१।।
संजीवनीलताहरण पटुतरम्
मनोवेगधारिणम्मनसिज खण्डनम् ।
श्री काशीनाथ श्री मनोहारि
राम नाम जपन्तं श्रीहनुमन्तम् ।।भजभज।।२।।

—०—

हनुमान्–९ रागं आरभि/बिलहरि–तालं आदि

### पल्लवि

सिद्धिद हनुमन्त जय जय ।।सिद्धिद।।

### अनुपल्लवि

*संसृति वारिधि पोतसुदुस्तर,
सुलभमुपाय प्रदर्शक हनुमन् ।।सिद्धिद।।

### चरणम्

लक्ष्मण प्राणद लक्ष्मी सुवर्धन,
लक्ष्यसुदृष्टिद लक्ष रक्षोहर ।
लवण महोदधितरण सुकुशल,
काशीनाथऽऽश्रित काशी निलयग ।।सिद्धिद।।

—०—

हनुमान्–१० रागं बिहाग–तालं आदि

### पल्लवि

अंजनि सुत हनुमन्त सुबुद्धिद [सुधीर],
अपरिमितानन्द बोधस्वरूप ।।

### अनुपल्लवि

अगणित संसृति वारिधि पोत,
आश्चर्यं चित्र चरित्र सुशोभन ।।अंजनि।।

---

* द्रुतगति

## चरणम्

अणिमादि सिद्धि प्रदायक दक्ष,
आगम वेद्य श्री राम सुसम्मत ।
जानकी जीवनदायक कुशल,
श्री काशीनाथ पदद्वय भक्तिद ॥अंजनि॥१॥

—०—

हनुमान्—११ रागं कानडा—तालं आदि

## पल्लवि

स्मर वायु पुत्रं अंजना सूनुम्,
अपरिमेय रूप ममितपराक्रमम् ॥स्मर॥१॥
रुद्र बीजोद्भवम् रुद्र स्वरूपम्,
रोग हरणम् रुद्र सेव्य रूपम् ॥स्मर॥२॥
दशमुख कंटक न्दर्शन योग्यं,
दशमुखरूपं दर्शित वैभवम् ॥स्मर॥३॥
एकादशमुख मेकाग्र सेव्यम्,
एकान्त वेद्य मेनोनिबर्हणम् ॥स्मर॥४॥
किल किला शब्द स्महामन्त्र रूपम् ।
बृह्मराक्षसादि समुच्चाटन मन्त्रम् ॥स्मर॥५॥
दास काशीनाथ श्रीराम भक्तिदम्,
श्री राम सेवा करण सुशीलम् ॥स्मर॥६॥
काशीनिलयं काशीनाथ प्रियम्,
कामित फलदं काम कलेबरम् ॥स्मर॥७॥

—०—

मंगलं—१ रागं पूर्वकल्याणि—तालं एक

सीताराम राधाकृष्ण मंगलम्पार्वती मनोहर श्रीमंगलम्
कंसरावण मन्मथहर पाहिमंगलं सर्वदादेहि मंगलम् ॥सीताराम॥ १
मंद हसन मंजुभाषणमंगलं वेणुवाद्यमंजुवदनमंगलम्,
मन्दरधर मंगलकर मन्मथाकार मायातीत मंगलं सदा ॥२॥
क्षीरसिन्धु शेषशयन मंगलं सम्पदादि दानशौण्ड मंगलम्,
बोधजनक नित्यनिलय भूरमापते दीनपाल नित्यमंगलम् ॥३॥
सनकयोगि सर्वसिद्धि दायक सामवेदगानलीन मंगलम् ।
सात्विकरूप सच्चिदाकार सान्द्र सुगुण सान्द्रानन्दविजय मंगलम् ॥४
सारसाक्ष साधुगम्यमंगल सर्वसज्जनाधार जयमंगलम्,
संयमि वन्द्य संगविजितसाधुरंजनसंपत्कर शर्मदायक ॥५॥
तुलसिदलादि मोदप्रद पादपंकज तुलसिमालिका सुशोभकन्धर ।
तुम्बुरु वर नारद संगीत सुखलोल विनायकारूढ मंगलम् ॥६॥
कारुण्यामृतसिन्धुमध्य चन्द्रशोभन कालकूटपान लोकशंकर,
कामदहन काल भंजन कलिमलापह कामकोटिजित सुन्दर ॥७॥
नन्दिपतंजलि भृंगिसेव्यपाद मंगलं व्याघ्रपाद प्रमथनुत मंगलम् ।
भस्मभूषण शुद्धस्फटिक सात्विक प्रिय साम्राज्य ज्ञान दायक ॥८॥
ब्रह्मानन्ददायक श्रीमंगलं काशीनाथ हृदय वन्द्य मंगलम्,
कामदायक कामदहनशरणपालक पाहि दीन शरणमंगलम् ॥९॥

—०—

मंगलं (शिव)—२ रागं मध्यमावति—तालं आदि

पल्लवि

मंगलं भवतु सदा सदाशिव मंगलं भवतु सदा ॥

## अनुपल्लवि

नन्दिव्याघ्रपाद भृंगिपतंजलि,
सुरमुनि सेवित पाद पंकेरुह ॥मंगलं॥

## चरणम्

करिराज वसन शंभो नागाभरण भस्मभूषित देह ।
गंगा विभूषित गरल गलांकित चन्द्रमौलीश्वर चन्द्रवदन शंभो ॥१॥
करुणामय सागर कमनीय शेष कुण्डल मण्डित,
सिद्धि विनायक सुब्रह्मण्याश्लिष्ट सिद्धेश्वर प्रभो सिद्धिप्रदायक ॥२॥
कैलास वासिन् शंभो सर्वजन कैवल्य ज्ञानप्रद,
काशीनाथ वर जायान्न दायिनि क्षुज्जराव्याधि निवारिणि
शंकरि ॥३॥

—०—

मंगलं (कृष्ण)–३ रागं मध्यमावति–तालं शापु

## पल्लवि

मंगलं कुरु सततं मन्मथतात मंगलं कुरु सततं ॥

## अनुपल्लवि

मन्दर धर नगवर समुद्धरण
मन्द हसन जय मंजुल भूषण ॥मंगलं॥१॥

## चरणम्

कौस्तुभमणिभूषण कुटिलालक,
कौन्तेय प्रिय करण ।

कूर्मरूपधर क्रूरदानवहर,

कुत्सित जनदूर कंस हरणजय ।।मंगलं।।२।।

कौसल्यानन्द वर्धनकर धृत,

कमनीयशर चाप ।

लक्ष्मण भरत शत्रुघ्न विभीषण

सुग्रीव जाम्बवद्वायुसुताश्रित ।।मंगलं।।३।।

कैलासनिलय शम्भो काशीनाथ,

ज्ञानमोक्षप्रद भो ।

गजमुखषण्मुख पार्वतीगणाश्रित

भूति भूषित गंगा चन्द्रकलाधर ।।मंगलं।।४।।

—०—

मंगलं—४ रागं सुरुटि—तालं शापु

पल्लवि

मंगलं मंगलं जयतु [भवतु] ते मंगलं मंगलं ।।

अनुपल्लवि

मंगलदायक मदन मनोहर,

मंजुल भाषण मामवमारजनक ।।

मन्दाकिनी जनक मधुमुरहरणतेमंगलं ।।मंगलं।।

चरणम्

पाहिजनाधार पाहिपंकजनाभ,

पाहिपंकज नेत्र पालय ।

पाहिपरात्पर पाहिमनोहर,
पाहि जनार्दन मंगलम्मंगलम् ॥१॥

पतित जनोद्धार शरणागतोद्धार,
करिराजोद्धारक पाहि भो ।
अजामिलोद्धारक गौतम वधूद्धार,
विश्वोद्धारक ते मंगलम् ॥मंगलं॥२॥

कंसहरण जय रावणहर जय,
त्रिपुर हर जय काशीनाथ ।
त्रिभुवन पावन त्रिजगन्मोहन,
मंगल दायक पार्वतीरमण मंगलम् ॥मंगलं॥३॥

—०—

मंगलं—५ रागं षणमुखप्रिय—तालं एक

आगमादि मूल देव मंगलम्
आदिरन्तरहित देव मंगलम् ।
*आगम पुराण वेद्य देव मंगलम्
आ–दि–देव मंगलम् ॥१॥

शतमखादि देव विनुत मंगलम्
शमदमादि दायक श्रीमंगलम् ।
*शान्ति दान्ति ज्ञान वैराग्यं देहिमेश्रियम्
शां–वी–धेहि देहि मे सुखम् ॥२॥

काशीनाथ पूज्यपाद मंगलम्
कामकोटि मोहनांग मंगलम् ।

* द्रुतगति

*कालहरण कामजनक अद्रि भूमिजालोल,
का—ल भय हरण मंगलम् ।।३।।

—०—

संकीर्णं नवरागमालिका—तालं रूपक

## पल्लवि

(१) हंसध्वनि रागं ।

गजवदनमुपाश्रयामि
सिद्धि बुद्धि दायकम्-सुमुखम् ।।

## अनुपल्लवि

(२) केदार रागं ।

सुन्दरं षड्वदनम्पूजनीयम्
*षड्गुण संयुत देव सेना वल्लीयुतम् ।।गजवदनं।।

## चरणम्

(३) गाम्बोधि रागं ।

सद्योजात पंचमुखं गंगा सोम शकलान्वितम्
शारदाभ्रदिव्य देहम्
मन्मथाहंकार हरणम्* शंकरि संयुत देहम्
मन्द स्मेर [स्मित] दिव्य मुखाब्जम् ।।गजवदन।।

(४) कल्याणि रागं ।

जानकी श्रीरामम्भजे जलज दिव्य लोचनं श्यामम् ।

---

* द्रुतगति

(५) ब्याकटै रागं ।

जामदग्नि मद हरणम् वालि रावणादि हरणम् ।।गजवदन।।

(६) मोहन रागं ।

राधिका महोत्सवकरं रुक्मिणी सहाय चरम् ।

(७) बिलहरि रागं ।

गोप गोपिका वलयित रास क्रीडा लोलं बालम् ।।गजवदन।।

(८) सुरुटि रागं ।

काशीनाथ हृन्निलय श्रीराम सेवा धुरन्धरम्

(९) मध्यमावति रागं ।

वायु सुतम्प्रणत करम् सिद्धि बुद्धि शौर्यं प्रदम् ।।गजवदन।।

—०—

दीपाह्वान कीर्तनं (राम) रागं यदुकुलगाम्बोधि——तालं आदि

एहि विभो एहिविभो मरकतकान्तिशरीरा-
भरताग्रेसर राम ।।१।।

सनकादि मुनिवन्द्य जनक सुता हृन्निलय
कमनीय धृत चाप ।।२।।

एहिजगन्मोहन यमुना तीर विहार
देवकि नन्दन एहि ।।३।।

पुण्डरीक वरद विट्ठल पण्ढरिपुरनिलय
वारिज दल नयन ।।४।।

पाहि दयाजलनिधे मुरली वादन लोल
नवजल धर देह॥५॥

काशीपुराधीश शम्भो वाम भागाश्रित वामा
चन्द्र कलाधर एहि ॥६॥

चिन्मयरूप शंकरि ज्वालारूपिणि देवि
एहि जगज्जननि ॥७॥

ज्योतिर्मयरूपा एहि परम स्वप्रकाश
भासय दीपक मनिशं ॥८॥

—०—

ब्रह्मश्री अयाचक रामशास्त्रिणा रचिता

# ॥श्री राधाकल्याण चूर्णिका॥

तत्र खलु नन्दनाऽतिशयित चन्दनादियुत बृन्दारण्ये कदाचिन्नन्दनन्दनः बृन्दावनतृणनन्दित गोबृन्दानुगत नन्द-स्कन्धारूढः ऊढामपि स्वपाणिग्रहणाभावेन दुःखसंमूढ़ां प्रायश्शरीर मनोव्यथां राधां मनसि निधाय स्वावतरण कारणं मेघावतरणं आलोच्य मेघश्रेणीं दीर्घवेणीं तां चाकलय्य यशोदा शिशुरतिद्रुत तदागमनेनापि द्रुतहृदयेन गोनायकेन पित्रा परित्राणाय वृषभानुपुत्र्यासमर्पितस्तद्बाधां विधमन्निव तत्स्कन्धा-रूढस्तयाच गाढ़मालिंगितः तत्कालाविर्भूत सन्तानाद्यनेक तरुनिकर बहिः प्राकारान्तर्गताऽनेक रत्नरंजित प्रदेशान्तर्गत देहली युक्त कदलीवनान्तर्गताऽनर्घाऽनर्गल कवाट द्वाराऽ-न्तर्गताऽनेक कल्याण सामग्री युक्त बहुतम मणि प्रवेक क्वचित सहस्रस्तम्भमण्टपान्तर्गत पर्यंकारूढ यौवनाऽरूढाऽतिप्रौढ निजापरमूर्तिदर्शन समकालाऽन्तर्हित शिशुशरीर दर्शनेन संजाताऽऽह्लादां राधां स्मर-स्मरणयोरंकुरेणैक वाक्येन गोलोक वृत्तान्तं स्मारयित्वा तदनुक्षणं क्षणमपि कालं न सहेयमिति श्लथित भूषणया तया भाषमाणो वाणीपतिमाहूय तत्स्तुतः प्रस्तुत कल्याणं वर्णयामास—सचात्मयोनिर्जगद्योनि भूतयोः राधामाधवयोः गान्धर्व विवाह महोत्सवाय मंगलाष्टकं अष्टधाऽऽ-रभते ॥

## ।।लग्नाष्टक श्लोकाः।।

विघ्नेशश्शशि सूर्य मंगल बुधश्शुक्रस्तथागीष्पती,
राहुः केतुयुतश्शनैश्चर युत स्सर्वे शुभस्थानगाः ।
गो भू भूसुर रक्षणाय वसुधां सम्प्राप्तयो राप्तयोः,
राधामाधवयोर्विवाहसमये कुर्वन्तु ते मंगलं ।।सुलग्ने
सावधान।।१।।

गन्धर्वाप्सर सिद्ध चारणगणाः दिव्यांगनानां गणाः,
गायन्तोदिविजात दुन्दुभिरवैः वीणारवैः संयुताः ।
नृत्यन्तो ललितं मिताक्षरपदैः स्तोत्रैस्तुवन्तोमुदा,
राधामाधवयोर्विवाहसमये कुर्वन्तु ते मंगलं ।।सुलग्ने
सावधान।।२।।

इन्द्रो वह्नियमौ तथा निर्ऋतिः पाशी मरुद्यक्षराट्
ईशानः सह वाहनैस्स्वरमणी युक्ता नियुक्ता मया ।
भूभाराऽसुर राजसंघ दमनं कर्तुं धरां प्राप्तयोः
राधामाधवयोर्विवाहसमये कुर्वन्तु ते मंगलं ।।सुलग्ने
सावधान।।३।।

शंभुष्षण्मुख पार्वती गजमुखाः स्वैस्स्वैर्गणै स्संयुताः,
नन्दी भैरव वीरभद्र सहिता स्सर्वेपि शर्वप्रियाः ।
नाम्ना नाशयितुं कलेर्मलमलं लीलातनुं प्राप्तयोः,
राधामाधवयोर्विवाहसमये कुर्वन्तु ते मंगलं ।।सुलग्ने
सावधान।।४।।

विश्वामित्र वसिष्ठ कश्यप भरद्वाज स्तथा गौतमः,
तच्छिष्या जमदग्निरत्रिरतुला वन्ये मुनीनांगणाः ।

दान ध्यान समाधि संभव फलं दातुं धरां प्राप्तयोः,
राधामाधवयोर्विवाहसमये कुर्वन्तु ते मंगलं ।।सुलग्ने
सावधान।।५।।

वाणीसिन्धुसुता गणेशजननी शक्रस्य पत्नी तथा,
सावित्री तुलसी विदेह तनया श्रीमत्यरुन्धत्यपि ।
पातिव्रत्य तपःफलं सुलभतो दातुं धरां प्राप्तयोः,
राधामाधवयोर्विवाहसमये कुर्वन्तु ते मंगलं ।।सुलग्ने
सावधान।।६।।

गंगा सूर्यसुता विरिंचि महिषी चान्तर्वहा नर्मदा,
ताप्ती पापविनाशिनी च शुभदा गोदावरी बाहुदा ।
कावेरी प्रमुखा स्स्वकीय शमलं दग्धुं धरांप्राप्तयोः,
राधामाधवयोर्विवाहसमये कुर्वन्तु ते मंगलं ।।सुलग्ने
सावधान।।७।।

प्रह्लादोथ पराशरश्शुक बली व्यासो महान्नारदः,
लंकेशःपवनात्मजःप्रभृतयस्सर्वे विरक्ता अपि ।
धर्मं भागवतं कलावति सुखं वक्तुं धरां प्राप्तयोः,
राधामाधवयोर्विवाहसमये कुर्वन्तु ते मंगलं ।।सुलग्ने
सावधान।।८।।

—०—

ब्रह्मश्री काशीनाथशास्त्रिणा विरचितं

# ।। राधाकल्याण कीर्तनं ।।

रागं गाम्बोधि—तालं आदि

## पल्लवि

राधाकृष्ण कल्याण महोत्सव मालोकये महदद्भुतम् ।
आनन्दमानन्दमानन्द मखिलदं कृष्ण लीलाऽमृत पानमनोज्ञं ।।१।।
बृन्दावन तुलसी वन मध्ये गोबृन्द चारण प्रमुदित नन्दे
कृष्ण माया मेघ विद्युन्महावाते घोरमहावर्षभीत नन्दे ।
नील तमालादि घोरान्धकारे रोदिति भीतममाद्भुत कृष्णं,
प्रापय राधिके सत्वरगेहं प्राप्स्यसिशीघ्र ममोघ सुमंगलं ।।२।।
प्रस्थिता कृष्ण समर्पितचित्ता कृष्णं समालिंग्य सत्वरगेहं,
देव सुनिर्मितमध्वनि मण्टपमद्भुतं वीक्ष्य सम्मग्नचित्ता ।
नवमणि स्तम्भ सहस्त्रविराजितं रत्नविनिर्मितभित्ति समेतं,
तोरणध्वज पताकादिरलंकृतं कदली क्रमुकसपुष्प वितानितं ।।३।।
विद्युद्दीप सहस्त्रकोटिमित विद्युन्मालि प्रभायुतमुज्ज्वलं,
पुष्पवनारामोद्यान वल्लीयुत दीर्घिका कूपतटाकयुतं ।
दुन्दुभि वीणा वेणु मृदंगादि आनक ढक्कादि वाद्य सुघोषितं,
सिद्ध विद्याधर गन्धर्व किन्नर चारणयक्ष महोरगसेवितं ।।४।।
सुरगुरु नारद तुम्बुरु विधिमुख सनक द्वैपायन कौशिक गौतम,
शौनक गर्ग वसिष्ठ शुकब्रह्म भूसुर घोषित वेद सुघोषं ।

किम्पुरुषादि बन्दीजनालंकृत दासदासीगणिकादिसुसेवितं,
ज्योतिष हास्य विशारद कंकण घोषित चामरि बृन्दनिषेवितं ॥५॥

दिव्य चिन्तामणि चन्दन पारिजात कल्पक मन्दार नन्दन शोभितं
कर्पूर कुंकुम मृगमद विपिन बिडाल मदान्वित गन्धवराढ्यं ।
चम्पक मल्लिका जातिपुष्प द्रव चन्दन काष्ठ विनिस्सृत तैलं,
स्थल कमलद्रव केतकी सुद्रव चन्दनपंक सुवासना पूरितं ॥६॥

बीजपूराम्र नारिकेर दाडिम जंबीर पनस खर्जूर नारंगक,
विविधदेशाहृत सौगन्ध्यपूरित सकल फलादि सुशोभित देशं ।
स्वर्णवर्णाभ सुकुंकुम मिश्रित मौक्तिक चूर्ण सुलड्डुक मोदकं,
दिव्य सुधारस श्रीखण्ड शष्कुलि दिव्य सुवासितपायस पूर्णं ॥७॥

शर्करा कुंकुम मिश्रित दिव्यान्नशर्कराऽपूप गुलापूप संयुतं,
पूर्णशशांक तिरस्कृत नवनीत कूर्चिका मिश्रितदध्योदनं ।
तिन्त्रिणी माष नारिकेर वार्ताक जम्बीर मरिचाद्यन्न समूहं
फेन पयःखण्ड शर्करा मधुघृत दधि नवनीत सुगन्ध सुपूर्णं ॥८॥

सूप सुशष्कुलि माष वटकादि माषबृहद्वृत्त शाकादि संयुतं,
जरण नारिकेर मरिच हिंग्वादक धान्यजमोदा सुसैन्धव सुसंयुतं ।
धान्याक मत्स्याक्षि वास्तु सुकैडर्यक शाक वर्गादि सुशोभित देशं,
मुकुर प्रसाधनि कुंकुम हरिद्रा मंगल द्रव्यादि संभृत देशं ॥९॥

रजत सुवर्ण पत्रादि सुशोभित स्वर्ण प्रभायुत नागवल्ली दल,
पूगी फलैला जातिपत्री फल कुंकुम शशिचूर्ण लवंग युतं ।
स्थल कमलद्रव केतकी कस्तूरि कुंकुम मौक्तिक दिव्य सुधायुतं,
बहुविध वासना द्रव्य समन्वित वीटिका वटिका मोद सुसंपूर्णं ॥१०॥
विकसित केतकी स्थल कमलद्रव बहुविध पुष्प सुगन्ध सुवासित,
बहुविध परिमल द्रव्यादि मिश्रित वर्ति सुधूप सुवासित देशं ।

किमिदम्महावन मध्य प्रदेशं मयसुविनिर्मितमद्भुत मण्डपं,
विस्मिता काम कलादि संपूर्णा कन्दर्प कोटि लावण्य मनोज्ञा ॥११॥

चारुदती सुकुमार शरीरा चम्पक नासिका दिव्य सुगन्धा,
बिम्बफलाधरा दीर्घसुनेत्रा अम्बुजवदनाऽऽभरणसुभूषिता ।
अगणितरत्न सुवर्ण संघट्टित दिव्य पीताम्बर परिवृत शोभना,
कृष्णं समुद्वीक्ष्य विस्मिता राधिका अंकग कृष्णमनालक्ष्य
सुस्मिता ॥१२॥॥

यमुनापुलिनग कुंजगृहान्तग उज्ज्वलहेम रत्नादि विनिर्मित,
दिव्य सिंहासन मध्यगमद्भुतं इन्द्रनीलाचल कान्तिशरीरं ।
मन्मथ कोटि मनोहर रूपं फुल्लसरोरुह सुन्दर वदनं,
चम्पक नासिकं बिंबफलाधरं कमलदलायत नेत्र सुरम्यं ॥१३॥

नव मणि समुज्वल दिव्यकिरीटं कस्तूरितिलक सुशोभितफालं,
कुन्दमुकुल सम दन्तसुपंक्ति नवरत्न मौक्तिक रचितसुकुण्डलं ।
कौस्तुभशोभित कण्ठ प्रदेशं विद्रुम मौक्तिक रत्नसुहारं,
सौगन्ध्य तुलसी पुष्पादि सुघटित वनमाला शोभितकंठ प्रदेशम्॥१४

कटितट परिवृतदिव्यदुकूलं अरुणकिरणजित पीतांबरावृतं,
केयूर मूर्मिका कंकणनूपुर कटितट श्रृंखला शोभित शोभनं ।
नवरत्नविनिर्मित छत्र वराढ्यं कारुण्य पूर्ण कटाक्ष सुरम्यं,
सर्वमनोहर यौवन रूपं राधिका वीक्ष्य सव्रीडित नम्रा ॥१५॥

गोलोक वृत्तान्तं संस्मृत्य राधिका कृष्ण समीप सिंहासन संस्थिता
[मध्यस्था],
सर्वेसमुद्वीक्ष्य सर्वजगत्प्रभुं सर्वमायाऽऽवरणादि विहीनं ।
दिव्यपटावरणान्तग कुंजे राधिका कृष्णं ननाम च नम्रा,
स्वस्तिसुवाचनपूर्वकविस्मिता राधिकाकृष्णकल्याणमहोत्सवे॥१६॥

नवरत्नमौक्तिक स्वर्णादि सुघटित मंगलसूत्र सुमंगलधारणं,
पाणिग्रहण महोत्सव संभ्रम लग्नाष्टक पूर्व सुमंगल वाचनं ।
विविध वर्णाक्षतैरानर्चुरानन्द पीयूष पान सुनिर्वृतचित्ताः,
आनन्दतुन्दिलप्रमुदितमानसास्संगीतलालसाः लास्यकृता-
दराः ॥१७॥

शिव काशीनाथ गणेश वल्लीश्वर नारद ब्रह्म मुनीश्वर तुम्बुरु,
गन्धर्व किन्नरदेव नदीगण भारती गौरि महर्षि गणाः [युताः] ।
दिव्यगीतानन्द सागर संमग्ना विस्मृतदेहगेहादि कलत्राः,
मंगल हारती पुष्पसुवृष्टिं चक्रुः श्रीकृष्ण लीलामृतमत्ताः ॥१८॥

कृष्णमायाद्भुत दिव्य चरित्रं श्रीकृष्णभक्तिदमनघमनन्तं,
पुत्र पौत्रादि सम्पत्कर शुभदं धर्मार्थ कामादि मोक्षप्रदं ।
ज्ञानवैराग्यादि भक्तिद शोभनं कविजन प्रीति प्रदायक मनिशं,
संसृतिबन्ध विमोचन दक्षं दिव्यसुधानिधि शोभन रूपं ॥१९॥

—०—

श्रीरामकृष्णशास्त्रिणा

रचितेयं

# ।। भगवत्कीर्तनमाला ।।

# श्रीरामकृष्णशास्त्रि रचिता

# भगवत्कीर्तनमाला

शंकरगुरु—१  रागं पूर्वकल्याणि—तालं रूपक

## पल्लवि

शंकर गुरु माश्रये—चन्द्रशेखर देशिकम् ।।शंकर।।

## अनुपल्लवि

श्रृंगाचलाऽलंकृत शारदा पीठ स्थितम्
श्रीचन्द्रमौलीश्वर सम्पूजन तत्परम् ।।शंकर।।

## चरणम्

भक्ताऽनुग्रह तत्परं—अभक्तजन वशंकरम्
नृसिह्मवन गुहावास श्चिन्मयानन्द रूपम् ।
वेदान्तादि मतषट्क प्रवर्तकं योगीन्द्रम्
तापत्रय विदलनम् रामकृष्ण भक्ति प्रदम् ।।शंकर।।१।।

—०—

शंकरगुरु—२  रागं हंसनादं—तालं आदि

## पल्लवि

हंस नाद मग्न परम हंस वर्यं ।।हंस।।

## अनुपल्लवि

सच्चिदानन्द रूप शंकर
सकलाऽऽगमान्त वेद्य भव्य मूर्ते ॥हंस॥

## चरणम्

नाम रूप भेद भिन्न बोधरूप,
दर स्मेर मुख दयारसघन ।
चन्द्रशेखर वर्य देशिकेन्द्र,
पाहि मामनाथं रामकृष्ण दासम् ॥हंस॥१॥
शृंगगिरि मध्य तुंगा तीर स्थित,
शारदाम्बिका पूजनोन्मुख ।
श्रीमदभिनव विद्यातीर्थ शिष्य
सेवितांघ्रि पद्म भक्त कल्पतरो ॥हंस॥२॥

—०—

गणेश—१ रागं हंसध्वनि—तालं आदि

## पल्लवि

शंकरि तनय शरणं शरणम्
कुंजर वदन श्रीकुंकुमनिभदेह ॥शंकरि॥

## चरणम्

अंकुशाऽभय वर मोदक हस्त,
अन्तकारि वर सूनु वरिष्ठ ।
कुम्भजादि मुनि संस्तुत महिम,
रावणारि प्रिय रामकृष्ण नुत ॥शंकरि॥

—०—

गणेश—२ रागं वाचस्पति—तालं आदि

पल्लवि

गजानन म्भूतसेवितम् ।
पार्वती सुतं सततन्नमामि ।।गजाननं।।

अनुपल्लवि

गणनायकं गान लोलुपम्,
गीर्वाण स्तुतं गूढतत्त्वरूपम् ।।गजाननं।।

चरणम्

मोदक प्रिय म्मोददायकम्
मोह वारकम्मोक्षदायकम् ।
मंगल कर म्मूलकारणम्,
मूषिक वाह म्मुनिगण वन्द्यम् ।।गजाननं।।१।।
गराशन सूनुं गलन्मदगण्डम्
नाग भूषण न्नाकराज नुतम् ।
गंगा जनक रामकृष्ण स्तुतम्
पाशांकुश धरं वाचस्पति गीतम् ।।

—०—

गणेश—३ रागं शंकराभरणं—तालं खण्डत्रिपुट

पल्लवि

चिन्तामणि गणपतिम् चिन्तयाम्यहम् ।।चिन्तामणि।।

## अनुपल्लवि

चिन्ता शोक निवारण चतुरम्

चिन्तितार्थ फल वितरण दक्षम् ।।चिन्तामणि।।

## चरणम्

तापसाग्रेसर कुंभजनुत चरणम्,

ताप त्रय विदलन पटुतर चरणम् ।

मणिमय कलशोद्धृत शुण्डादण्डम्,

मणि वलयांगद शोभित दोर्दण्डम् ।।चिन्तामणि।।१।।

गन्धर्वादि गण संस्तुत वैभवम्,

नाक सुन्दरी गान मुदित भव भवम् ।

पाशांकुशेक्षुदण्ड धृतमोदक हस्तम्,

तिमिरान्तक भानु कोटि प्रकाशम् ।।

*{तामरसदलनिभ देहं गणेशं-मंजुलमौक्तिक हारं श्रीकरम्,
{निखिल सम्पत्प्रद वराऽभीति हस्ते-निरवधिकृपापूरम्

रामकृष्णनुत देवम् ।।चिन्तामणि।।२।।

—०—

गणेश—४ रागं नाटै—तालं आदि

## पल्लवि

जयगणेश जयगणेश जयगणेश पाहिमाम् ।

---

* द्रुतगति

## अनुपल्लवि

जयगणेश जयगणेश जयगणेश रक्षमाम् ॥

## चरणम्

कुंभजादि सेवितम्-कुंजराननं शुभम्
कुंकुमारुण प्रभम्-कुमारदेव सेवितम् ।
काम कोटि सुन्दरं-कार्तिकेय सोदरम्,
कामितार्थ दायकं-कालभीति वारकम् ॥जयगणेश॥१॥
भक्तकामपूरक-म्भाविताथं दायकम्,
भक्तमोह वारक-म्भाललोचनं परम् ।
भानुकोटि भास्वर-म्पाप पुंज शोषकम्,
भुक्ति मुक्ति दायक-म्भजेसदा विनायकम् ॥जयगणेश॥२॥

—०—

गणेश—५ रागं ब्याकटै—तालं आदि

## पल्लवि

गुहाग्रजाय नमस्ते,
नमस्ते— *गराशनसुताय गौरीतनयाय
विनायकाय वरदाय—गुहाग्रजाय ॥

## अनुपल्लवि

गदाधराय—गदापहाय,
गणाधिपाय—गजाननाय ॥गुहाग्रजाय॥

---

* द्रुतगति

### चरणम्

गिरीश तनयाय गिरिजात्मजाय
गीर्वाणगण सेविताय पराय ।
गन्धर्व चारण वन्दिताय
रामकृष्ण नुत पदाम्बुजाय ॥
*पाशांकुशेक्षुदण्ड धराय मंगल कराय,
पाक शासनादि नुताय पंकजासन वन्द्याय ।
पंकजाक्ष भागिनेयाय भक्तपालनाय
प्रणव स्वरूपाय परात्पराय सुमुखाय ॥गुहाग्रजाय॥१॥

—०—

गणेश—६ रागं नलिनकान्ति—तालं आदि

### पल्लवि

शक्तिगणपम्भजे सदा
शक्ति दायकं शक्ति बालकम् ॥शक्ति॥

### अनुपल्लवि

गण नायकं गानलोलुपम्
गद्दा पद्म धरं गदनाशकम् ॥शक्ति॥

### चरणम्

इक्षुचापधरं इन कोटि भासम्
ईतिभीति हरं ईप्सितार्थदम् ।

* द्रुतगति

लम्बोदरं मोदक प्रियं,
भक्ति दायकं रामकृष्ण प्रियम् ॥शक्ति॥१॥

—०—

गणेश–७ रागं नलिनकान्ति–तालं आदि

## पल्लवि

शक्ति गणपं भजे सदा
शक्ति दायकं शतमख नुतम् ॥शक्ति॥

## अनुपल्लवि

शक्ति बालकं शक्ति पोषकं [वर्धकं],
शक्त्यायुधधर देव संस्तुतम् ॥शक्ति॥

## चरणम्

सकल वेद शास्त्र पुराणादिगम्यम्
सकल मुनिवर्य ध्यान गोचरम्
सकल विद्या प्रदम्बुद्धि दायकम्
सकल विघ्नहरं सिद्धि बुद्धियुतम् ॥शक्तिगणपं॥१॥
शर्वसंभवं शंभुतनयम्
नलिनकान्ति युतन्नागभूषणम् ।
स्कन्दाग्रजं सकलार्त्तिहरम्,
सर्वदेव पूज्यं रामकृष्ण नुतम् ॥शक्तिगणपं॥२॥

—०—

गणेश–८ रागं अठाणा–तालं रूपक

## पल्लवि

सुमुख विनायक गणनायक
परिपालयमाम् ॥सुमुख॥

## अनुपल्लवि

सुन्दरतर पंकजधर मंजुलवर कंजमाल ॥सुमुख॥

## चरणम्

पन्नगभूषण पार्वतीतनय,
पन्नगारिवाह भागिनेय ।
पापविमोचन परमपवित्र,
पाशमोचक श्री रामकृष्ण नुत ॥सुमुख॥१॥

—०—

गणेश–९ रागं हंसध्वनि–तालं आदि

## पल्लवि

गणनायक जय वक्रतुण्ड,
गिरिशात्मज गुण भूषित ॥गणनायक॥

## अनुपल्लवि

गिरिजा तनय (कुमार) गीर्वाणगेय [सेव्य],
गलन्मदगण्ड अगजातनय ॥गणनायक॥

## चरणम्

गदा पाश पद्म चक्राङ्कुशधर,
गजवदन गर्वितारिहर ।
मोदकप्रिय रामकृष्ण वर
मोददायक श्रीहंसध्वनिवेद्य ॥गणनायक॥१॥

—०—

गणेश—१० रागं अमृतवर्षिणी—तालं आदि

## पल्लवि

चिन्तामणि विनायकं भजेऽहम्
चिन्तामणि विभूषितं वरदम् ॥चिन्तामणि॥

## अनुपल्लवि

चिदानन्द रूपं चिन्ताशोकहरम्
चित्ततापहरं सच्चित्स्वरूपम् ॥चिन्तामणि॥

## चरणम्

सिद्धि बुद्धि सेवितं सिह्मवाहम्,
सिन्दूरारुण वर्ण भीमदेहम् ।
सिद्ध चारण गण संस्तुतं सुमुखम्,
सिद्ध कपिलमुनि पूजितं गणेशम् ॥चिन्तामणि॥१॥
परशुधरम्पाप पुंज हरम्,
पंकजकरं पद्ममाला धरम् ।
मोदककरं गणदैत्य हरम्,
रामकृष्ण नामाऽमृतवर्षिणम् ॥चिन्तामणि॥२॥

—०—

गणेश——११ रागं किलिकण्णि——तालं चापु

ढुण्ढि गणपति एण्ड्रु ओरु मुरै शोन्नालुम्
तुन्बं विलहुमडी किलिये
विनैकल् तीरुमडी किलिये, पल
विनैकल् तीरुमडि ॥१॥

येङ्गुं निरैन्द पोरुल् भक्तर्हलुक्कनु कूलन्
शक्ति कुमारनडी किलिये-शिव
शक्ति कुमारनडी ॥२॥

एत्तनैयो पिरविहलिल् विधविध तुन्बङ्गलिल्-नान्
तत्तलित्तु निन्ड्रेनडी किलिये,
दिक्कु दिशै इल्लामले किलिये,
दिक्कु दिशै इल्लामले ॥३॥

तत्तलिक्कुं येन्नै नोक्किकरुणैयुडने वन्दु अवर्
मानिड जन्मं तन्दारडी किलिये,
मेलान जन्ममडी किलिये,
मेलान जन्ममडी ॥४॥

मानिड जन्ममडैन्दु एमान्दु पोहामले
कुमर सहोदरनै पणिन्दिडुवाय्,
कुमर सहोदरनै किलिये
कुमर सहोदरनै ॥५॥

वान्नवर्हल् विरुम्बिडुम् मानिडजन्ममिदु
इदै वीणाक्कामले किलिये,
दन्तिमुखनै पणिन्दिडुवाय् किलिये
दन्तिमुखनैपणिन्दिडुवाय् ॥६॥

रामकृष्ण न्पणिन्दिडुं कुम्बिमुखनै दिनन्दिनमुम्
पाडिक्कोण्डाडुवोमडी किलिये,
जन्मसाफल्यमडी किलिये
जन्मसाफल्यमडी ॥॥७॥

—०—

शारदा—१ रागं वागेश्वरो—तालं आदि

पल्लवि

वागीश्वरी म्प्रार्थयाम्यहम्,
वाग्रूपिणीं विद्याप्रदायिनीम् ॥वागीश्वरीं॥

अनुपल्लवि

गीष्पति सेवितां विधियुवतीम्
गीर्वाणाद्यखिल लोक जननीम् ॥वागीश्वरीं॥

चरणम्

स्वयम्भु रसना समाश्रितां,
हरीश्वरादि देवगण पूजिताम् ।
हंसवाह मनोल्लास कारिणीम्
परमहंस मानस विहारिणीम्
रामकृष्ण मनोरथ पूरणीम्
सुमधुर संगीत मुदित शारदाम् ॥वागीश्वरीं॥१॥

—०—

शारदा—२ रागं हंसविनोदिनी—तालं आदि

पल्लवि

प्रणमाम्यहम् शारदाम्बिकाम्
प्रणतार्तिजन परिपालिनीम् ।।प्रणमाम्यहं।।

अनुपल्लवि

पंकजासन वाग्विलासिनीम्
पंकजासनाम्परदेवताम् ।।प्रण०।।

चरणम्

शृंगगिरि मध्य तुंगातीर निलयाम्
शंकर भगवत्पाद स्थापिताम् ।
शंख कुन्द स्फटिकाभ वदनाम्
शातकुंभनिभ वस्त्र धारिणीम् ।।प्रण०।।१।।
श्वेतकीरकरां पुस्तक धारिणीम्
धृतवल्लकीं वरदाऽभयदाम्
वीणागान प्रियां सुरराज नुताम्
नत [भक्त] जन वाग्जाड्यापहाम् ।।प्रण०।।२।।
हंस वाहनां हर सोदरीम्
हंस रूपिणीं हंसविनोदिनीम् ।
हंस नादगम्यां चिद्रूपिणीम्
हंस वाह जायां रामकृष्ण सेव्याम् ।।प्रण०।।३।।

—०—

सुब्रह्मण्य—१ रागं षण्मुखप्रिय—तालं रूपक

## पल्लवि

षण्मुख प्रियकर सेनापते, *शरवणभव ॥षण्मुख॥

## अनुपल्लवि

फाल लोचन कुमार—मारकोटि सुन्दरांग—*मामव ॥षण्मुख॥

## चरणम्

पंकजाक्ष भागिनेय—पंकजाभ समदेह ।
पाकशासनादि वन्द्य—पामर जन पातक हर ॥षण्मुख॥१॥
वल्लिदेवसेनारमण वासवाद्यमर पालन ।
वासुकि तक्षक रूपधर वासनात्रयहरण चण ॥षण्मुख॥ २॥
तारक शूर पद्मासुर संहरणनिपुण पराक्रम ।
तापस जन मोक्षप्रद तारय रामकृष्ण दासम् ॥षण्मुख॥ ३॥

—०—

सुब्रह्मण्य—२ रागं कानडा—तालं आदि

## पल्लवि

शिखि वाहन शंकर तनय,
शातकुंभसम कान्तिमय देह ॥शिखि॥

## अनुपल्लवि

शक्ति तनय शक्त्यायुधधर
शर वण भव गुह षण्मुख ॥शिखि॥

---

* द्रुतगति

## चरणम्

शरणागत जन त्राण शौण्ड,
शरदम्भोरुह दल सम नेत्र ।
शतकोटि मन्मथ चारु रूप,
शतमख नुत देवसेनाऽधिप ॥शिखि॥१॥

तारकाऽधिपानन चारुनेत्र,
तारकाऽसुर हरणाऽग्रगण्य ।
तामरस दल निभदेह गुह,
तारयाशु मां रामकृष्ण दासम् ॥शिखि॥२॥

—०—

सुब्रह्मण्य–३ रागं आनन्दभैरवि—तालं रूपक
"गोपिकारमण" इति वत् ।

पार्वतीसुत पर्वताऽऽवास पंकजानन पाहिमाम् ।
षण्मुखजय, षण्मुखजय, षण्मुखजय पाहिमाम् ॥१॥
शंकरात्मज शंकरगुरु शातकुंभ सुवसन ।
षण्मुखजय, षण्मुखजय, षण्मुखजय पाहिमाम् ॥२॥
शक्तिधारक शक्तिबालक शाक्तपोषक पाहिमाम् ।
षण्मुखजय, षण्मुखजय, षण्मुखजय पाहिमाम् ॥३॥
भूतप्रेत निवारणाऽखिल रोगसन्तति नाशन ।
षण्मुखजय, षण्मुखजय, षण्मुखजय पाहिमाम् ॥४॥
वारणानन सोदर गुह वारिताऽखिल पातक ।
षण्मुखजय, षण्मुखजय, षण्मुखजय पाहिमाम् ॥५॥

तारकाऽसुर शिक्षण जय पामर भक्त पोषण।
षण्मुखजय, षण्मुखजय, षण्मुखजय पाहिमाम् ॥६॥
राका चन्द्रानन भक्त रामकृष्ण परिपालन।
षण्मुखजय षण्मुखजय, षण्मुखजय पाहिमाम् ॥७॥

—०—

सुब्रह्मण्य—४ रागं सहाना—तालं आदि

पल्लवि

पद्मनायकाऽनेक भास्वर
पद्मलोचन पापमोचन [परिपाहिमाम्] ॥

अनुपल्लवि

पद्माऽसुर संहरण निपुण
पन्नगारि वाहप्रिय भागिनेय ।पद्म॥

चरणम्

फाल लोचन तत्त्व बोधन
पातक ततिहर षडानन ।
पाकशासनादि सुरगणवन्द्य
पार्वतीसुकुमार जितकोटिमार ॥पद्म॥१॥
शक्तिबालक शक्त्यायुध धर
शक्तिसहित वल्लिनायक ।
दण्डायुधधर दण्डितारिवर्ग
शंकरप्रिय रामकृष्णनुत ॥पद्म॥२॥

—०—

सुब्रह्मण्य–५ रागं नाटकुरंजि––तालं झम्पा (१० अक्षर)

## पल्लवि

गुहमाश्रयामि सततं उमासुतं सुरविनुतम् ।।गुहं।।

## अनुपल्लवि

देवसेनापतिं देवराजादिनुतं
हतशूर पद्मासुरादिराक्षससततिम् ।।गुहं।।

## चरणम्

अग्नि संभवं कंजारुण वर्णदेहम्
वल्लिदेवसेनानायकं कार्त्तिकेयम् ।
※भानुकोटि प्रकाशं बालसुब्रह्मण्यदेवं
शक्ति हस्तं द्विषड्भुजं शिवगुरुं षण्मुखम् ।।गुहं।।१।।
कुंकुमारुण वर्णदेहं कुंभजाऽऽश्रित पादम्
कनकमय सुचेलं कामारिप्रियकुमारम् ।
※कामितार्थं वितरणशीलं सुकुमारम्
कमलाक्ष भागिनेयं दास रामकृष्ण पालम् ।।गुहं।।२।।

—०—

शिव––१ रागं हंसानन्दि––तालं आदि

## पल्लवि

चिदम्बर नाथनै पणिन्दिडु मनमे,
मनदिलडंगिय कल्मषं नीङ्गिड ।।चिदम्बर।।

---

※ द्रुतगति

## अनुपल्लवि

तिल्लै वनत्तिल् परञ्जोति स्वरूपमाय्,
भक्तर्हंलुक्करुल् पुरिय नटनमाडि निण्ड्र ।
कनक सभेशनै शिवकामि नेशनै,
कण्डु कलित्तिडुवाय् परमपदमडैय ॥चिदम्बर॥१॥
देव गन्धर्वसिद्ध मुनिवर् कलित्तिडुम्,
आनन्द ताण्डवमाडुं पदमलरै ।
रामकृष्णन् पणिन्दिडुं अम्बल वाणनै,
नम्बि पणिन्दिडुवाय् पामर जडमे ॥चिदम्बर॥२॥

—०—

शिव—२ रागं केदार—तालं आदि

## पल्लवि

केदारेश्वर माकलये,
केशवादि विनुतं गौरि मनोहरम् ॥केदारे॥

## अनुपल्लवि

कालपाश विनिवारकं-*भवहरम्,
कांक्षित मोक्ष प्रदायकं शंकरम् ॥केदारे॥

## चरणम्

कुसुमेषु जनक पूजित चरणम्,
कुंभजादि मुनि भावित वैभवम् ।

* द्रुतगति

कुन्द शंख स्फटिकाभ शरीरम्,
कुंजर मुख जनकं काशीनिलयम् ॥केदार॥१॥
रावण बाणाद्युपास्य देवम्,
राजित कनक सभा नटनरंगम् ।
राजित जटा जूटेन्दु खण्डम्,
राजीवाक्ष रामकृष्णाऽभयदम् ॥केदारे॥२॥

—०—

शिव—३ रागं भैरवि—तालं आदि

पल्लवि

कालभैरवं भजाम्यनिशम्,
कालभीतिहरम्परमपवित्रम् ॥काल॥

अनुपल्लवि

काल पाशधरं कामित फलदम्
कालदण्डधरं काशीनिलयम् ॥काल॥

चरणम्

काशीवासिजन पातक हरणम्,
काशी वास फल दायकं वरदम् ।
काशीपति प्रापक गणमुख्यम्,
काशी नगरी रक्षण धुरीणम् ॥काल॥१॥
रुद्राक्षमाला धृतकन्धरम्
कपालशूलधरं जटाधरम् ।
फाललोचनाऽऽदेश करम्परम्,
रामकृष्ण नुतं भैरवी वरम् ॥काल॥२॥

—०—

शिव—४ रागं शंकराभरणं—तालं आदि

### पल्लवि

शंकर माकलयेऽहं सततम्—शिव ॥शंकरं॥
शंकराभरणरागप्रियम्—शिव ॥शंकरं॥

### अनुपल्लवि

शंकरम् शिवंकरम् शशिशेखरम्
मृगधरम्भवभयहरं—शिव ॥शंकरं॥

### चरणम्

वामांकाऽऽश्रित गौरी वरम्
वामदेवादि मुनिगण सेवितम् ।
वासुकि तक्षकादि नाग भूषितम्
वासुकि शयन रामकृष्ण सन्नुतम् ॥शंकरं॥१॥

—०—

शिव—५ रागं गौले—तालं देशादि

### पल्लवि

प्रणमाम्यहं गौरी रमणं [वरं]
प्रणतार्ति संहरणनिपुणम् ॥प्रणमाम्यहं॥

### अनुपल्लवि

परमेश्वरम्पन्नगेन्द्र भूषम्,
पराशक्ति वरम्भक्त परिपोषम् ॥प्रणमाम्यहं॥

### चरणम्

पंकजारि चूड म्भाल लोचनम्,
पंकजासनादि सुरपोषणम् ।
पंचाननं दग्धपंचबाणम्,
भूति भूषितं विमल गौलांगम् ।
*करधृत डमरु त्रिशूल खट्वांगम्,
गौरी समाश्रितार्ध वामांगम् ।
गंगाविभूषितोत्तमांगम्,
रामकृष्ण विनुत सुन्दरांगम् ॥प्रणमास्यहं॥१॥

—०—

शिव—६ रागं गांबोधि—तालं आदि

### पल्लवि

चन्द्रकलावतंसम्भजेऽहम्
भवानी नायकं गुह जनकम् ॥चन्द्र॥

### अनुपल्लवि

चन्द्रांशुगौर वर्णं स्मर हरम्,
चन्द्राग्नि रवि नयनं सुनयनम् ॥चन्द्र॥

### चरणम्

चतुर्मुखादि देवगण पूजितम्
चण्डेश्वरादि भक्तगण सेवितम् ।
चारु भस्मांग राग सुशोभितम्
भक्ताऽभीष्टवराऽभय हस्तम् ॥चन्द्र॥

---

* द्रुतगति

परशु मृगाश्रित हस्तं भवहरम्
परम मंगलप्रद पार्वती वरम् ।
परम पावन तारकोपदेशकरम्
वर नारदादिभक्त रामकृष्ण नुतम् ॥चन्द्र॥

—०—

शिव–७ रागं आनन्दभैरवि—तालं रूपक
अक्षर मालिका 'गोपिकारमण' वत्

अम्बिकारमण अम्बुजेक्षण अम्बुजानन पाहिमाम् ।
शंकरशिव शंकरशिव शंकर जय पाहिमाम् ॥१॥
आश्रिताऽभयदायक शिव आनन्दाऽमृतवर्षक ।
शंकरशिव शंकरशिव शंकर जय पाहिमाम् ॥२॥
इन्दिरारमण पूजिताऽमर वन्दिताऽखिल रक्षक ।
शंकरशिव शंकरशिव शंकर जय पाहिमाम् ॥३॥
ईतिभीतिनिवारणाऽखिल लोकपातक नाशक ।
शंकरशिव शंकरशिव शंकर जय पाहिमाम् ॥४॥
उत्पलानन उरगभूषण उरुपातक नाशन ।
शंकरशिव शंकरशिव शंकर जय पाहिमाम् ॥५॥
ऊर्जिताऽघ विमोचकाऽऽर्जित पापनाशन कारक ।
शंकरशिव शंकरशिव शंकर जय पाहिमाम् ॥६॥
ऋषिसेवित ऋद्धिदायक ऋणमोचक पाहिमाम् ।
शंकरशिव शंकरशिव शंकर जय पाहिमाम् ॥७॥

एणपोतक धारणाऽभयवरदायक पाहिमाम् ।
शंकरशिव शंकरशिव शंकर जय पाहिमाम् ॥८॥
ऐश्वर्यप्रद ईशकोणनिवास शंकर पाहिमाम् ।
शंकरशिव शंकरशिव शंकर जय पाहिमाम् ॥९॥
ओषधीश विराजमान जटामण्डल शोभित ।
शंकरशिव शंकरशिव शंकर जय पाहिमाम् ॥१०॥
औडवादि रागपूर्ण उमाभरण शंकर ।
शंकरशिव शंकरशिव शंकर जय पाहिमाम् ॥११॥
अंबुजासन वन्दितशिव अन्धकाऽसुर सूदन ।
शंकरशिव शंकरशिव शंकर जय पाहिमाम् ॥१२॥

—०—

शिव—८ शिवषट्पदी स्तोत्रं

भस्मांगरागाय भवोद्भवाय,
भवाब्धिपोताय भवायतुभ्यम् ।
नमो भवानी पतये भवक्र,
ताताय कुर्मो नम ईश्वराय ॥१॥
स्मशान वासाय दिगम्बराय,
स्मरान्तकाय स्मरसुन्दराय ।
भस्माऽवगुण्ठाय त्रिलोचनाय,
त्रिशूल खट्वांग पिनाक धराय ॥२॥
गंगाधराय गिरिजाधवाय,
गौरांग शोभाय गरलांकिताय ।

कैलास वासाय कलाधराय,
नमामि तुभ्यं फणिभूषणाय ॥३॥
राजाधिराज परिसेविताय,
राजीवनेत्र परिपूजिताय ।
रागादिदोष परिवर्जिताय,
राकेन्दुबिम्ब सदृशाननाय ॥४॥
गान्धर्वविद्या परिबृह्मिताय,
गानाऽमृतैक रस पूरिताय ।
नन्दीश मुख्यगण सेविताय,
शिवाय शर्वाय महेश्वराय ॥५॥
यतिस्वरूपाय यतिप्रियाय,
यक्षादि सिद्ध मुनिसेविताय ।
यज्ञप्रियाय उमाश्रयाय,
नमो नमस्ते जगदीश्वराय ॥६॥
शिवषट्पदीस्तोत्रं यः पठेच्छिव सन्निधौ ।
शिवलोकमवाप्नोति शिवेन सहमोदते ॥

—०—

अम्बिका—१ रागं सहाना—तालं मिश्रचापु

पल्लवि

शंकरि शांभवि कौमारि कृपाकरि,
दीन संरक्षणि पालय माम् ॥शंकरि॥

## अनुपल्लवि

मायारूपिणि माधव सोदरि
मंगल रूपिणि मंजुल भाषिणि ॥शंकरि॥

## चरणम्

मृगराज वाहिनि शुंभ निषूदिनि,
महिषासुर वध मर्षिणि सदये।
चर्मासि गदा शूल धारिणि विमले,
शरणागत त्राणे शंकर तोषिणि ॥शंकरि॥१॥
माया निवारिणि ज्ञान प्रदायिनि,
साधक जन मन संचारिणि।
पंचदशाक्षर रूपिणि विमले,
दास रामकृष्ण हृदय विहारिणि ॥शंकरि॥२॥

—०—

अम्बिका—२ रागं रंजनि—तालं आदि

## पल्लवि

कंजदलायत नयने—अम्ब,
कमलापतिसेवित पदयुगले ॥कंज॥

## अनुपल्लवि

कनकमय वसने कनकाऽऽभरणे,
कमनीय मृदुल चरणे मां पालय ॥कंज॥

## चरणम्

कंजभवार्चित चरणाम्बुरुहे,
कुंभजादि मुनि प्रकटित वैभवे।

---

द्रुतगति

कांची निवासिनि कामाक्षि,

कामकोटि निलये रामकृष्ण सोदरि ॥

*कामारि विलासिनि कामित फलदे

कमला सेवित पद युगले

भक्तजन परिपालिनि भवभय भंजनि [हारिणि]

हर रंजनि गुह जननि निरंजनि ॥कंज॥१॥

—०—

अम्बिका—३ रागं जनरंजनि—तालं आदि

## पल्लवि

पंकजाक्षि परमेश्वरि–परिपालयाशुमां—श्री ॥पंकजा॥

## अनुपल्लवि

पाक शासनादि वन्दिते,

पातकि जन पातक निवारिणि ॥पंकजाक्षि॥

## चरणम्

पंकजसम मृदुल चरणे शंकरि

पन्नगारि वाहन सोदरि अम्ब ।

राका शशि समानने सुन्दरि,

रामकृष्ण नुत सज्जनरंजनि ॥

*शातकुम्भसम पीत चेले शंकरमोहिनि शिव जाये,

शारदाऽऽराधित पदकमले मणिद्वीप निवासिनि माये ॥पंक॥

—०—

---

* द्रुतगति

अम्बिका (अन्नपूर्णा)—४ रागं कल्याणवसन्तं—तालं आदि

पल्लवि

श्री अन्नपूरणे पाहि माम्,
अखिलाण्ड कोटि नायिके ।।श्री।।

अनुपल्लवि

अखिल जन्तु कदम्ब क्षुन्निवारणे,
अखिल लोक जननि विश्वविनोदिनि ।।श्री।।

चरणम्

काशीनाथ वामांक निवासिनि,
काशीनगर गंगातट विहारिणि ।
कालभैरव ढुण्ढिविनायक
विन्दुमाधव सहिते गुह जननि ।।
*पायसान्न पूर्णं रत्नकलश धृत वाम करे,
पाकशासनादि प्रपन्न जन पातक हरे ।
वारिजासनादि समस्तदेवगण वन्दित
चरणे सकरुणे रामकृष्ण सोदरि ।।श्री।।

—०—

अम्बिका—५ रागं हेमवती—तालं आदि

पल्लवि

हैमवतीं गुह जननीं स्मरामि ।।हैम।।

---

* द्रुतगति

### अनुपल्लवि

हंसवाह जनक सोदरीं परमेश्वरीं
*माया कल्पित जगत्त्रयरूपिणीं सुरूपिणीं ।।हैम।।

### चरणम्

हरिकेश वामांक निवासिनीम्,
हरिकेशवादि देवगण पूजिताम् ।
बिन्दुमध्यस्थितां भुवनेश्वरीम्,
सुहासिनीं हरिसोदरीं नतोदरीम् ।।
*हत्यादि पापशमनीं हानिवृद्धि विवर्जिताम्
रामकृष्ण सन्नुतां शिवाम् [परदेवताम्] ।।हैमवतीं।।

—०—

अम्बिका—६ रागं कल्याणि—तालं मिश्रचापु

### पल्लवि

महिषासुर मर्दिनि महाराज्ञि
महनीय गुण शालिनि मां पालय ।।महिषासुर।।

### अनुपल्लवि

माया रूपिणि माया निवारिणि,
माया कल्पित जगत्परिपालिनि ।।महिषासुर।।

### चरणम्

मारकोटि सुन्दरांगि महामाये,
रामकृष्ण सोदरि शिव जाये ।

---

* द्रुतगति

मारान्तक वामांक वासिनि शंकरि,

मायिक प्रपंच कोट्चण्ड नायिके ।।महिषासुर।।

—०—

अम्बिका (लक्ष्मी)—७ रागं भैरवि—तालं आदि

पल्लवि

सरसिज निलये माम् पालय,

सरसिज नाभ मनोल्लासिनि ।।सरसिज।।

अनुपल्लवि

सरसिज निभ वदने सुरदने,

जित मदने भव भय विनाशिनि ।।सरसिज।।

चरणम्

सरसिज नयने मन्द हसने,

केयूराङ्गदादि मणि वलये ।

सदये साम्राज्य प्रद चरणे,

भक्ताभीष्ट फल प्रद निपुणे ।।

*धन-कनक वस्तु वाहनाद्यष्टैश्वर्यं प्रदे

रामकृष्ण सन्नुत चरणे ।।सरसिज।।

—०—

अम्बिका—८ रागं आरभि—तालं रूपक

पल्लवि

विष्णुमाये पाहिमाम्—जगज्जननि ।।विष्णु।।

* द्रुतगति

## अनुपल्लवि

चेतनारूपिणि बुद्धिप्रदायिनि
मोहनिद्रानिवारिणि क्षुच्छमनि ॥विष्णु॥१॥

## चरणम्

छायारूपिणि–शक्तिप्रदायिनि,
तृष्णाशमनि–क्षान्तिस्वरूपिणि ।
जातिभेदरहिते–लज्जारूपिणि,
शान्तिप्रदायिनि–श्रद्धारूपिणि ॥विष्णु॥२॥
कान्तिरूपिणि–लक्ष्मीप्रदे,
वृत्तिपोषिणि–स्मृतिप्रदायिनि ।
दयारूपिणि–तुष्टिदायिनि,
मातृरूपिणि–भ्रान्तिनिवारिणि ॥विष्णुमाये॥३॥

—०—

अम्बिका—१ चर्तुदशभुवन रागमालिका—तालं मिश्रचापु

## पल्लवि

(१) रागं कल्याणि

कल्याणीं कल्याण गुण शालिनीम् ।
कल्याण शैल निलयां प्रणमामि ॥कल्याणीं॥

## अनुपल्लवि

करुणाऽमृतसागरां कदम्ब कुसुमप्रियाम्,
कलिदोषहरां कर्मफल प्रदाम् ॥कल्याणीं॥१॥

## चरणम्

### (२) रागं ब्याकटे

एकाररूपां एकानन्द चिदाकृतिम्
एक भक्ति मर्दाचितां एषणा रहिताऽऽदृताम् ।
एला सुगन्धि चिकुरां एनः कूट विनाशिनीम्
एक वीरादि संसेव्यां एक प्राभव शालिनीम् ॥कल्याणीं॥२॥

### (३) रागं मोहन

ईप्सितार्थं प्रदायिनीं ईश्वरत्व विधायिनीम्
ईश्वर प्रेरणकरीं ईतिबाधा विनाशिनीम् ।
लक्ष्मो वाणी निषेवितां ललाट नयनार्चिताम्
लक्ष कोट्चण्ड नायिकां लम्बोदरप्रसूं लभ्याम् ॥कल्याणीं॥३॥

### (४) रागं बिलहरि

ह्रींकार रूपां ह्रींकार निलयाम्
ह्रींकार मन्त्रां ह्रीं विभूषणाम् ।
ह्रींकार वाच्यां ह्रींकार पूज्याम्
ह्रींकार चिन्त्यां ह्रीं ह्रीं शरीरिणीम् ॥कल्याणीं॥४॥

### (५) रागं गाम्बोधि

हकार रूपां हरिब्रह्मेन्द्र वन्दिताम्,
हर्यक्ष वाहनां हत दानवाम् ।
हत्यादि पाप शमनीं हस्तिकृत्तिप्रियांगनाम्,
हरिद्रा कुंकुमादिग्धां हालामदोल्लसाम् ॥कल्याणीं॥५॥

(६) रागं कमास

सकार रूपां सर्वमंगलाम्,
सर्वांग सुन्दरीम् सर्वं सौख्य दात्रीम् ।
सर्वं विमोहिनीं सर्वसाक्षिणीम्,
सर्वाऽवगुण वर्जितां सर्वाऽऽभरण भूषिताम् ॥कल्याणीं॥६॥

(७) रागं सहाना

कालहन्त्रीं कामितार्थदाम्
काम संजीवनीं कलानाथ मुखीम्
कपाली प्राण नायिकां कारुण्य विग्रहाम्,
कल्पवल्लीसम भुजां कस्तूरीतिलकांचिताम् ॥कल्याणीं॥७॥

(८) रागं साम

हकारार्थां हाटकाऽऽभरणोज्ज्वलाम्,
हरित्पति समाराध्यां हठात्कार हताऽसुराम् ।
हल्लीस लास्य सन्तुष्टां हंस मन्त्रार्थ रूपिणीम्,
हानि वृद्धि विवर्जितां हैयंगवीन हृदयाम् ॥कल्याणीं ॥८॥

(९) रागं दरबार

लतापूज्यां लयस्थित्युद्भवेश्वरीम्,
लास्यदर्शन सन्तुष्टां लावण्य शालिनीम् ।
लक्ष्मणाग्रज पूजितां लब्धभक्ति सुलभाम्,
लज्जापद समाराध्यां लब्धसम्पत्समुन्नतिम् ॥कल्याणीं॥९॥

(१०) रागं पूर्वकल्याणि

ह्रींकार शशि चन्द्रिकां ह्रींकाराम्भोद चंचलाम्,
ह्रींकारैक परायणां ह्रींकारोद्यान केकिनीम् ।

ह्लींकार पंजर शुकीं ह्लींकारांगणदीपिकाम्,
ह्लींकारांभोज भृंगिकां ह्लींकार तरुमंजरीम् ।।कल्याणीं।।१०।।

(११) रागं कापि

सकलागम संस्तुतां सदसदाश्रयाम्,
सद्गति दायिनीं सदाशिव कुटुम्बिनीम् ।
सकलाऽधिष्ठान रूपां सर्वप्रपंचनिर्मात्रीम्,
समानाऽधिक वर्जितां सगुणां सकलेष्टदाम् ।।कल्याणीं।।११।।

(१२) रागं नादनामक्रिया

काव्यलोलां कामेश्वर मनोहराम्,
कामेश्वराऽऽलिंगितांगीं कामेश्वर सुखप्रदाम् ।
कामेश्वरमनःप्रियां कामेश्वर विमोहिनीम्,
कामेश्वर ब्रह्मविद्यां काम कोटि निलयाम् ।।कल्याणीं।।१२।।

(१३) रागं आनन्दभैरवि

लब्धपाप मनोदूरां लब्धाहंकार दुर्गमाम्,
लब्धैश्वर्य समुन्नति लब्धयौवन शालिनीम् ।
लब्धातिशय सर्वांग सौन्दर्याम्,
लब्धनानागमस्थिति लब्ध हर्षाऽभिपूजिताम् ।।कल्याणीं।।१३।।

(१४) रागं मध्यमावति

ह्लींकार कमलेन्दिरां ह्लींकार तरु शारिकाम्,
ह्लींकारादर्श बिम्बितां ह्लींकार स्थान नर्तकीम् ।
ह्लींकार नन्दनाराम नवकल्पक वल्लरीम्,
ह्लींकार हिमवद्गंगां ह्लींकार परसौख्यदाम् ।।कल्याणीं।।१४।।

—०—

राम–१ रागं असावेरी—तालं मिश्रचापु

पल्लवि

शरणं शरणं रघुराम एन्नै
कात्तिडुवाय् परन्धाम ॥

अनुपल्लवि

उन्नै तविर वेरु एनक्कोरुवरुमिल्लै,
पारुक्कुलियिनिण्ड्रेन्नैं काप्पात्तिडुवाय् ॥शरणं॥

चरणम्

अन्नै तन्दैयुं नीये मैन्दन् सहोदरन्
कल्वियुं शेल्वमुं नीदाने ।
एङ्गुं निरैन्दिरुक्कुं परम्पोरुलुं नीये,
येन्दनिरुलै नीक्क जोतिरूपमाय् विलंगुं ॥शरणं॥१॥
राम कृष्ण वेण्ड्र कदरिक्कोण्डिरुक्कुं एन्नै,
शोधिप्पदु मुमक्कु विलैयाट्टो उन्दन्
तिरुवडिहलै नम्बि शरणम्पणिन्देन्
दीनरक्षक राम एलैमेल् मनमिरंगि ॥शरणं॥२॥

—०—

राम–२ रागं कापि—तालं मिश्रचापु

पल्लवि

स्मर मानस रघुरामम्—राक्षस कुल भीमम् ॥स्मर॥

## अनुपल्लवि

दुष्टनिशाचर खण्डन चतुरम्,
तापस मुनि मानस ताप हरम् ॥स्मर॥

## चरणम्

कौशिकमख संरक्षण धीरम्,
गौतमवर वधू पावन चतुरम् ।
खण्डित शिवचाप भूपगर्व हरम्,
सीतापरिणय शत काम सुन्दरम् ॥स्मर॥१॥
दूर्वादलश्यामं सीतासमेतम्,
दूरीकृत भवतापम्भवपोतम् ।
दुष्टनिबर्हण करधृत चापम्,
दुर्मद भव मोह निवारणरूपम् ॥स्मर॥२॥
पशुपति नुत नामम्परमपवित्रम्,
पतितपावन नामम्पावन चरित्रम् ।
दास राम कृष्ण सेवित पदयुगम्,
दारित भवभयं पालित दास वर्गम् ॥स्मर॥३॥

—०—

राम—३ रागं मोहनं—तालं रूपक

## पल्लवि

रघुवीर तव चरणयुगम्
चिन्तयामि सततं—रघुकुल तिलक ॥रघुवीर॥

## अनुपल्लवि

देवादिदेव देवराज विनुत,
देवकार्य साधक दशरथ तनय ।।रघुवीर।।

## चरणम्

कौशिक मख परिपालन चरणयुगम्,
गौतमवधू शापोद्धार चरणयुगम् ।
जानकी मन मोहकर चरणयुगम्,
जामदग्नि बल दर्पहर चरणयुगम् ।।चिन्तयामि।।१।।

गुरुवाक्य परिपालित चरणयुगम्,
गुहराज परिसेचित चरणयुगम् ।
गर्वित खरदूषण हरण चरणयुगम्,
गलितभवताप शबरीमोक्षप्रद चरणयुगम् ।।चिन्तयामि।।२।।

हनुमदादि वानर राज सेवित पदम्,
हरिगणावृत विभीषणाऽभयद पदम् ।
हर्षितसुजन रावणवध कुशल पदम्,
हंसवाह संस्तुत पुष्पकारूढ सीतारामम् ।।चिन्तयामि।।३।।

भरतार्चित पादुका शोभित चरणयुगम्,
भरतार्पित राज्य पट्टाभिषिक्त चरणयुगम् ।
भरताग्रजराम भक्तपोषक चरणयुगम्,
परिपालित दासवर्ग रामकृष्णाऽभयदपदम् ।।चिन्तयामि।।४।।

—०—

राम—४ रागं तोडि—तालं आदि

पल्लवि

नातोटि पलुकक उन्न कारण मेमो ? रामय्य ॥नातोटि॥

अनुपल्लवि

पतितुडनि नन्नुनिराकरिंचिनावो,
पतितपावनुडनि बिरुदुगलिगिन,
निन्नुमर वक (निरतमु) नम्मिन ॥नातोटि॥

चरणम्

राम जगदभिराम सीता समेत रघु-
कुल सोम मुनिमानसधाम परन्धाम ।
राम परिपूर्ण काम घनश्याम,
शंकरनुतनाम कामजनकरामकृष्णादासनुत ॥नातोटि॥१॥

—०—

राम—५ रागं सावेरी—तालं त्रिपुट चापु

पल्लवि

राम रघुराम घनश्याम रविकुल सोम ॥राम॥

अनुपल्लवि

सीताऽभिराम जितकाम नतसार्वभौम ॥राम॥

चरणम्

नतजन पालन राम—नव नीरद श्याम,
साकेत पुरनिलय राम—शंकरनुत नाम ।

*रावण कुंभकर्णादि राक्षसभीम कोदण्ड राम,
रामकृष्ण दासनुत नाम भरताग्रजपट्टाभिराम ॥राम॥१॥

—०—

राम—६ रागं रामप्रिय—तालं आदि/रूपक

पल्लवि

राम प्रियदर्शन मृदुभाषण
भक्त पोषण मां पाहि पाहि ॥राम॥

अनुपल्लवि

राजीवाक्ष राघवेन्द्र-राजराजशेखर प्रभो जय ॥राम॥

चरणम्

वामभागाश्रित भूमिजा लोल,
वातात्मजादि वानर परिपाल ।
वामदेवादि नुत भूरि लील,
वाग्विलासप्रद रामकृष्ण नुत ॥राम॥

—०—

राम—७ रागं हमीर कल्याणि—तालं आदि

पल्लवि

क्या अमीर क्या गरीब,
सबके हृदय में बसे रघुवीर ॥क्या॥

---

* द्रुतगति

## अनुपल्लवि

भक्तन हेतु लियो अवतार,
स्वयं विराजत निराकार ।
भक्तनहेतु त्यज्यो दरबार,
भक्तन हेतु बान्ध्योपारावार ।।क्या।।१।।

## चरणम्

काशीदेख्यो प्रयाग देख्यो,
देख्यो मथुरा हरिद्वार ।
जहँ तहँ सन्तन समाज बडी,
करे विचार विमर्श गभीर ।
रामकिसुन कहे सुनो भाई साधो,
नाम जपन से तरो भवसागर ।।क्या।।२।।

—०—

राम—८ रागं हंसनादं—तालं आदि

## पल्लवि

शरणागत त्राण शौण्ड राम ।।शरणागत।।

## अनुपल्लवि

शरणागत म्पाहि मामनाथम्
रामकृष्ण दासं भवाऽम्बुधि मग्नम् ।।शरणागत।।

## चरणम्

श्यामसुन्दराकार मोहनाङ्ग,
शातकुंभवसन मेरुसमधीर ।

शमनान्तक प्रिय नामधेय,

हंसनाद वेद्य जानकी रमण ॥शरणागत॥१॥

—०—

राम—९ "गोपिकारमण गोकुलोत्सव" वत् ।

रागं आनन्द भैरवि—तालं रूपक

जानकीरमण जमदग्निज गर्वखण्डन पाहिमाम् ।
राघवजय राघवजय राघवजय पाहिमाम् ॥१॥
लक्ष्मणाग्रज लक्षणोज्ज्वलरत्नकुण्डल पाहिमाम् ।
राघवजय राघवजय राघवजय पाहिमाम् ॥२॥
कौशिकाऽनुग ताटकान्तक मखरक्षक पाहिमाम् ।
राघवजय राघवजय राघवजय पाहिमाम् ॥३॥
गौतमस्त्रीशापमोचन शिवकार्मुक भंजन ।
राघवजय राघवजय राघवजय पाहिमाम् ॥४॥
रघुवंशज रणपण्डित राक्षसान्तक पाहिमाम् ।
राघवजय राघवजय राघवजय पाहिमाम् ॥५॥
साकेताधीशसाम्राज्यप्रद साधुसन्नुत पाहिमाम् ।
राघवजय राघवजय राघवजय पाहिमाम् ॥६॥
शरणागत विभीषणाऽवन लंकाराज्यद पाहिमाम् ।
राघवजय राघवजय राघवजय पाहिमाम् ॥७॥
रावणादि राक्षसान्तक रावणाऽनुजपोषक ।
राघवजय राघवजय राघवजय पाहिमाम् ॥८॥
रामकृष्ण दासपोषक राजीवाक्ष पाहिमाम् ।
राघवजय राघवजय राघवजय पाहिमाम् ॥९॥

—०—

राम—१०

## नामरामायणम्

रागं सारंगा—तालं झम्पा

### पल्लवि

श्रीराम जयराम जयजय राम ।
श्रीराम जयराम जयरघुराम ॥१॥

### चरणम्

देवादिदेवनुत देवसार्वभौम,
दशरथ वर कुमार रघुवंशदीप ।
कौशिक मखपाल राक्षसकुलकाल,
गौतमवधूद्धार शिवचापखण्डन ॥श्रीराम॥२॥
जनकजा मनोहर भार्गवदर्पहर,
सीतासमेतश्री कल्याण राम ।
पितृवाक्य परिपाल तापस मुनिवेष,
खरमारीचादि हर जटायुमोक्षद ॥श्रीराम॥३॥
हनुमदादिसेव्य सुग्रीवसख्य,
वालिनिग्रह चण सीताऽन्वेषण ।
अक्षय कुमार हर लंकादाहन,
विभीषणाऽभयद सेतुबन्धन ॥श्रीराम॥४॥
रणविजित श्रीराम लंकेशमथन,
वरविभीषण राज्याऽभिषेक कुशल ।
सीतासमेत जय रघुवीर राम,
भरताग्रज राम पट्टाभिराम ॥श्रीराम॥५॥

—०—

कृष्ण—१ रागं नायकि—तालं झम्पा

### पल्लवि

श्रीरंग नायकि समेत
श्रीरंगनायकमनिशं भावये ॥श्री॥

### अनुपल्लवि

श्रीरंगपुरनिलयं शेषभोगिशयनम् ।
पंकजासन जनकं पंकजदलनयनम् ॥श्री॥

### चरणम्

पंकजासनादि विनुतं परम पवित्रम्
पंकज बान्धव हिमकर वर नेत्रम् ।
पंकजदरार्यायुध वर धारिणं श्री
पंकजनाभ रामकृष्णादि रूपधरम् ।
※मन्दर गिरिधरं सुन्दर मुरली धरं दिव्यपीताम्बर धरम्
चुम्बित राधिकाऽधरम्मधुमुरहरं रम्यवेषधरं श्रीधरम् ॥श्री॥

—०—

कृष्ण—२ रागं बिहाग्—तालं आदि

### पल्लवि

संग चले नन्दलाल ग्वाल बालके ।

### अनुपल्लवि

भर पिचकारी रंग बसन्ती
खेलत होली बृज गलियन में ॥संग॥

---

※ द्रुतगति

## चरणम्

द्वार द्वार पै गोपकिशोरी,
ठाडे चितवत श्याम बिहारी ।
कोई बरसावत रंग बिरंगी,
कोई उडावत गुलाल अबीरी ॥संग॥१॥

अवसर पाय राधा रानी,
भरपिचकारी रंगबिरंगी ।
खेलत होली श्यामबदन सन्,
चितवत सकुचाय मुसुकान भरी ॥संग॥२॥

बृन्दावन में खेलत होली,
देखि सराहत सुरतिय टोली ।
गावत लीला रामकिसुन के,
सुमन बरसावत नन्दन वन के ॥संग॥३॥

—०—

कृष्ण—३ रागं चारुकेशी—तालं आदि

## पल्लवि

चारुकेश मण्डित शिखि पिंछ,
केशिसूदन केशव मुरारे ॥चारु॥

## अनुपल्लवि

करधृत कल मुरली रवमोहित
सकल भुवन जन मनमोहक रूप ॥चारु॥

### चरणम्

कटितट शोभित कनक सुचेल
    कमनीय कौस्तुभ धृतवनमाल ।
कालीय मदविदार रामकृष्ण,
    कामित फलद नन्दगोपबाल ॥
*बृन्दावन भुविरासविलोल बृन्दारक वधूगानविलोल,
बृन्दारक मुनि बृन्दनिषेवित बालगोपाल भक्तपरिपाल ॥चारु॥१॥

—o—

कृष्ण—४ रागं आभोगि—तालं आदि

### पल्लवि

फणिफणाऽऽभोगि शयन कृष्ण,
    पद्मनाभ मुरारे मां पालय ॥फणि॥

### अनुपल्लवि

पंकज नयन पामर पालन,
    पन्नगाऽरि वाहन पतित पावन ॥फणि॥

### चरणम्

पंकजासनादि वन्द्य पाद
    पाकशासनारि शमन विनोद ।
पातकि जन पातक हर पाद,
    पालित रामकृष्ण दास धृतवेद ॥

---

* द्रुतगति

*परिपन्थि निवारक भक्तोद्धारक,
परिपालित भक्त जन मोहनिवारक,
परम भक्तवर प्रह्लाद परिपालक
परमानन्दकर मोक्षप्रदायक ॥फणि॥

—०—

कृष्ण—५ रागं तिलंग—तालं आदि

पल्लवि

गोविन्द जय गोपाल,
गोवर्धन गिरिधर गोपाल ।

अनुपल्लवि

गोप कुमार गोकुल लील
गोपी मानस लोल गोपाल ॥गोविन्द॥

चरणम्

यदुकुलतिलक यशोदबाल,
यमिजन मोह निवारण शील ।
इभराजगमन इभराजपाल,
बलरामकृष्ण बाल गोपाल ॥गोविन्द॥१॥

कंसमर्दन कालीय दमन,
कालिन्दी तट विहार लोल ।
कालमेघाभ पंकज नाभ,
राधा वल्लभ राज गोपाल ॥गोविन्द॥२॥

---

* द्रुतगति

वासुदेव श्री वासुकिशयन,
वामन रूप वारिज नयन ।
वामदेवादि मुनिगण पालन,
वातपुरी वास भक्त पालन ॥गोविन्द॥३॥

—०—



कृष्ण—६ रागं यदुकुलगाम्बोदि—तालं झंपा

## पल्लवि

राधिका मुख कमल मकरन्द मधु मधुप,
राजीव दलनेत्र पाहिमां राज गोपाल ॥राधिका॥

## अनुपल्लवि

राधिका मोहकर कलवेणु नाद लोल,
रासरंग केलि लोल मदन गोपाल ॥राधिका॥

## चरणम्

कनक मय कटि सूत्र कलित कौस्तुभ शोभ,
कनकांगद वलय मकर कुण्डल शोभ ।
कनकमय पीत पट परिवृत कटि देश,
कमलाक्ष यदुवीर पाहिमां सर्वेश ॥राधिका ॥१॥

राकेश रवि नयन राजीव सम वदन,
राकेन्दु सम वदन राधिका मन मोहन ।
रमणीय रूप सदन राधिकाऽऽराध्य मदन,
रामकृष्णाभिधान राक्षस कुल कदन ॥राधिका॥२॥

—०—

कृष्ण—७ रागं आनन्दभैरवि—तालं रूपक

## पल्लवि

माधव मधुमुर हर मां पालय हे ।
मायामानुष वेष मनसिजसुन्दर ॥माधव॥

## अनुपल्लवि

मन्दर नगधर वासुकिधृतकर,
मन्दस्मित सुधा वदन मायायुवतिरूपधर ॥माधव॥

## चरणम्

मा रमण मुचुकुन्द वरद,
मायाऽतीत स्वरूप मंजुलभाष ।
शंख चक्र गदा शार्ङ्ग पद्मधर,
शंकर मोहकर शातकुम्भवसन ॥माधव॥
*रासरंग नटनलोल राजीवाक्ष राधालोल,
रामकृष्ण गानलोल रम्यरूप गोपबाल ॥माधव॥

—०—

कृष्ण—८ रागं साम—तालं आदि

## पल्लवि

साम गानलोल—राधालोल ॥साम॥

## अनुपल्लवि

साधुजन परिपालन शील,
सारसाक्ष मुकुन्द गोपबाल ॥साम॥

* द्रुतगति

### चरणम्

सरसिज भव जनक दीनपाल,
सरसिज नाभ श्रीवेणु गोपाल ।
सरसिज नयन श्री धृतवनमाल,
सरस गुणार्णव पालय गोपाल ॥साम॥१॥



सकल निगमवेद्य रासलील,
सन्तत चिन्तित भक्त पाल ।
सामजवरद श्री सद्गुणशील,
साधुपोषक श्री रामकृष्णपाल ॥साम॥२॥

—०—

कृष्ण—९ रागं केदारगौले—तालं आदि

### पल्लवि

सरसिज नाभ सरसिज नयन,
सरसिज भव नुत मृदुल चरण ॥सरसिज॥

### अनुपल्लवि

सनकादि सन्नुत सामवेद गीत,
सामज वर नुत साधु सुविदित ॥सरसिज॥

### चरणम्

संकट हरण वेंकट रमण,
शेषाचल निलय भाग्य वितरण ।
शेष शयन विभो शंख चक्रधर,
शंकर नुत नाम रामकृष्ण स्तुत ॥सरसिज॥

—०—

कृष्ण—१० रागं दरबार—तालं आदि

पल्लवि

परिपाहिमां श्रीपद्मनाभ

पन्नग शयन पंकज नयन ।।परिपाहि।।

अनुपल्लवि

पंकजासनादि सुरगण वन्द्य

पन्नगारि वाह भक्तपरिपाल ।।परिपाहि।।

चरणम्

भक्त प्रह्लाद रक्षण निपुण

नरसिंह्म रूप आर्तितापहर ।

विद्युत्पुंजनिभ पापपुंजहर,

विद्याधर स्तुत रामकृष्ण रूप ।।परिपाहि।।

—०—

कृष्ण—११ रागं द्विजावन्ती—तालं आदि

पल्लवि

बालगोपालमहं भजे—सततम्

❀भक्ताऽभीष्ट फलदं भक्त पोषकम्

गोप कुमारं वारं वारम् ।।बाल।।

अनुपल्लवि

बाललीलं गोपबालवेषम्

गोपरमणीजारं—गोगणसंचारम् ।।बाल।।

---

❀ द्रुतगति

## चरणम्

रामाऽनुजं रम्यवेषधरम्,
रासकेलिविलासं राधालोलम् ।
राकेन्दु वदनं राजीव नयनम्,
रामकृष्ण सन्नुतं राजराज विनुतम् ।।बाल।।



—०—

संकीर्णं रागमालिका—तालं आदि

(१) रागं नाटे

## पल्लवि

गजाननाय नमो नम ॐ ।
गौरीतनयाय गुहाग्रजाय ।।गजाननाय।।

## अनुपल्लवि

गराशन सुताय गणाधिपाय,
सकल विघ्नहराय विनायकाय [नमो नमः] ।।गजाननाय।।

## चरणम्

(२) रागं गौल

सरसिजोद्भव विधि जायायै,
सकलविद्याप्रदायै वाण्यै नमः ।
शारद चन्द्र समाऽऽननायै,
विधु [चन्द्र] मौलि सहजायै नमः ।।गजाननाय।। १।।

(३) रागं आरभि

षडाननाय द्विषड्भुजाय,
वल्ली वराय देवसेनेशाय ।
शक्त्यायुध धराय नमस्ते,
शमिताखिल पातकाय गुहाय ॥गजाननाय॥२॥

(४) रागं तोडि

पंचाननाय पन्नगाभरणाय,
पार्वती वराय पातक हराय ।
फाल लोचनाय परशुधराय,
परिपालित दास वर्गाय हराय ॥गजाननाय॥

(५) रागं वरालि

पर्वत राज तनयायै शिवायै,
पद्मनाभ सहोदर्यै नमः ।
पाशांकुशाऽभय वर हस्तायै,
पर शिव जायायै परायै नमो नमः ॥गजाननाय॥

(६) रागं केदारगौल

दशरथात्मजाय राघवाय,
जानकी मनोहराय नमो नमः ।
सुग्रीवाञ्जनेय सेविताय,
रावणान्तकाय वीर राघवाय ॥गजाननाय॥

(७) रागं श्री

श्रीरुक्मिणी लोलाय नमः
वासुदेवाय वेद वेद्याय ।

कंस चाणूर मथनाय कृष्णाय,
गोपिका जार चोर शिखामणये ।।गजाननाय।।

(८) रागं सुरुटि

परदेवतायै वरलक्ष्म्यै,
पंकजहस्तायै नमो नमः ।
पंकजाक्ष जायायै श्रियै,
पद्मायै मन्मथ जनन्यै नमः ।।गजाननाय ।।




(९) रागं मध्यमावति

वातात्मजाय वारिधिलंघनाय,
सीता प्राणदात्रेऽक्षप्राणहर्त्रे ।
राम सेवापराय रामदूताय,
गानशास्त्र पराय रामकृष्णनुताय ।।गजाननाय।।

—०—

मंगलं—१ रागं भैरवि—तालं झम्पा

जयमंगलं नित्यशुभमंगलं ।।

मंगलं जानकी रमणाय श्रीमते,
मंगलं कमनीय मूर्तये ते ।
मंगलं रघुवंश भूषाय धन्विने,
मंगलं वेदान्त वेद्याय राघवाय ।।जयमंगलं ।।१।।
ताटकावध निपुण कौशिक मखपालनाय,
गौतम वधू शापनिवारण कुशलाय ।
शिव चाप भंजन पटुतर बाहु दण्डाय ते,
जानकी जयमाल भूषित गलाय ते ।।जयमंगलं।।२।।

ब्रह्मादिनुतिपात्र कमनीयदेहाय,
सनकादि मुनिगेय नाम वैभवाय ।
शक्रादि सुरगण वन्दिताय वेधसे,
देवादि देवाय जानकी वराय ॥जयमंगलं॥ ३॥

मंगलं पार्वती रमणाय शंभवे,
मंगलं सनकादि मुनिवन्दिताय ।
मंगलं नन्दीश्वरादि गण सेविताय,
मंगलं कैलास वास शंकराय ॥जयमंगलं॥ ४॥

—०—

